| अधिकरणानि विषया | कारिकासख्या | पृष्ठ-सख्या |
|---|---|---|
| स्फोटवादाभ्युपगमात् | ११२ | १४८-१६७ |
| शब्दशक्त्यभावात् | ११४-११७, १२३ | १६८-१७० |
| शब्दशक्तेर्बौद्धत्वात् | ११८-१२० | १७१-१७७ |
| अभिधादीना स्वरूपाणि | | १७२-१७४ |
| निगमनम् | १२१ | १७७ |
| अभिधाया अप्यभाव | १२२ | १८२ |
| अलकारादीनामपि ज्ञानरूपत्वम् | १२४-१२५ | १८६ |
| काव्ये भाषाया दर्पणत्वम् | १२६ | १९० |
| काव्य, मूर्ति, चित्र चेत्येतेषामभेदः | १२७ | १९०-१९१ |
| काव्य सगीत च | १२८-१२९ | १९३-१९४ |
| काव्यं नाट्य च | १३० | १९६ |
| ६. सहृदयदृशा काव्यविचारः | १३१ | १९७ |
| काव्यस्य कलात्वम् | ,, | ,, |
| जीवात्मन कलानाथत्वम् | ,, | ,, |
| विशेषाणा कलायाम् अलाङ्कारत्वम् | ,, | ,, |
| कलानाथे च रसत्वम् | ,, | ,, |
| कलानाथौ कवि. सहृदयश्च | १३२ | १९९ |
| वैखर्या महिमा | १३२-१३३ | १९९ |
| काव्यलक्षणम् | १३४ | २०० |
| सहृदयश्लाघ्यस्यार्थस्य त्रैविध्यम् | | २०१ |
| शब्दस्याप्यर्थत्वमेव | | २०१ |
| ७. काव्यत्वस्य महाव्याप्तिः | १३५-१३९ | २०४-२०८ |
| साहित्यशब्दार्थे स्वं मतम् | १४०-१४१ | २०९ |
| साहित्यशब्दार्थे प्राचा कथा | | २१०-२१६ |

| अधिकरणानि | विषयाः | कारिकासख्या | पृष्ठ-सख्या |
|---|---|---|---|
| ८ | काव्यतद्धर्मयोर्युगपदुत्पत्तिवादः | १४२–१४८ | २१७–२२२ |
| ९ | काव्यधर्माः | | |
| | गुणानां दोषाभावरूपा पूर्णतैव रूपम् | १४९ | २२५ |
| | भरतमतम् | १४९ | २२५–२२६ |
| | वामनमतम् | १५० | २२७ |
| | दोषाभावस्य प्रागभावरूपता | १५१ | २२८ |
| | गुणानां रसधर्मत्वख्यातिः | १५४ | २३१ |
| | अर्थगुणाना पूर्णताया लयः | १५५ | २३४ |
| | अलङ्कारस्यैव काव्यधर्मेषु मुख्यत्वम् | १५६ | २३४ |
| | अलङ्कारस्य महिमा | १५७–१५८ | २३५ |
| | धर्मस्य धर्मशास्त्रसमत चतुष्पात्त्वम् | १५७–१५८ | २३५ |
| | अलकारस्याऽवाच्यत्वम् | १५९ | २३७ |
| | लक्षणाख्या काव्यधर्माः | | |
| | भारताभिनवगुप्तमतानि | | २३६–२४३ |
| | भरताभिनवगुप्तमत-समीक्षा | | २४४–२४६ |
| | स्वाभिमत लक्षणलक्षणम् | १६०–१६२ | २४७–२४८ |
| | काव्यलक्षणम् | १६३ | २४९–२५१ |
| १० | रसे काव्यधर्मत्वाभावः | १६४–१६५ | २५२ |
| | पूर्वपक्षः | १६६–१६८ | २५३–२५५ |
| | उत्तरपक्षः | १६९–१७३ | २५६–२५८ |
| | अस्माक दर्शनम् | १७४–७७ | २५९ |
| | रसस्य लोकानन्दसोदरत्वम् | | २६०–२६१ |
| ११ | काव्यलक्षणम् | १७८ | २६२ |
| १२ | अस्माकं काव्यदर्शनम् | १७९ | २६२ |
| १३ | उपसंहृतिः | १८० | २६३ |

# नामसंक्षेपाः

## Abbreviations

| | |
|---|---|
| ना शा. | नाट्यशास्त्रम् |
| मनुस्मृ | मनुस्मृति |
| यो सू. | योगसूत्रम् |
| सू | सूत्रम् |
| AB | Abhinavagupta Abhinavabhāratī |
| AV | Ānandavardhan |
| DH· | Dhvanyāloka |
| GJ | Gaṅgānātha Jhā |
| H C | Harṣacarita |
| H S P | History of Sanskrit Poetics |
| K | Kārikā |
| Kathas, | Kathāsaritsā- |
| K G. | Kālidāsagranthāvalī |
| K p K P | Kāvyaprakāśa |
| KM | Kāvyamīmāṃsā |
| Km KM. | Kṛṣṇamurti |
| MB | Mahābhārata |
| MB | Mahābhāṣya |
| MM | Mammata |
| N C | Naiṣadhīyacaritam |
| ND | Nyāyadarśana |
| N Ś | Nāṭyaśāstra |
| PP. | Pages |
| PS. | Pāṇini's Sūtra |
| R | Rādhākṛṣṇan |
| R C | Ramachandra Dwivadi |
| Rv | Raghuvaṃśa |
| Śaku | Abhijñānaśākuntal |
| SB | Śābarbhāṣya |
| ŚP. | Śṛngāraprakāśa |
| ŚT. | Śāradātanaya |
| Skt. | Sanskrit |
| Sm. | Sāhityamīmāṃsā |
| Vikr. | Vikramorvaśīyam |
| VP | Vākyapadīyam |
| VV | Vyaktiviveka |
| Y S. | Yogasūtra |

# काव्यालंकारकारिकासारः

१. काव्यं ज्ञानम्,

२. अलंकारस्तस्यात्मा,

३. मध्यमाभिधा

संविदव्यभिचारेण तत्रोपाधिः सनातनः ॥ १ ॥

४. अलंकारोऽप्यलंभावस्वरूपः,

५ रूपकादिकम् ।

माधुर्यादि च तत्रैव लीयते निरवग्रहम् ॥ २ ॥

६. शब्दत्वं वैखरीमात्रे,

७. तत्र नास्त्येव काव्यता ।

८. अर्थोऽपि ज्ञानमूर्त्यैव काव्यभावं प्रपद्यते ॥ ३ ॥

९. कारणं प्रतिभामात्रम्,

१०. प्रतिभायाश्च कारणम् ।

सत्त्वोद्रेकः,

११ भवन्त्यत्र कारणानि बहून्यपि ॥ ४ ॥

१२. शब्दस्य देहे नास्त्येव शक्तिः काप्यर्थबोधिका ।

१३. रसः काव्ये विभावादियोजनात्माऽस्त्यलंकृतिः ॥ ५ ॥

१४. सामाजिकरसः काव्यरसत्वं न प्रपद्यते ।

१५. शक्तिः शब्दस्य निष्पत्ति-प्रक्रिया च रसस्य या ॥ ६ ॥

ते तु साहित्य-शास्त्रस्याविषयो हानिकारकः ।

१६. उपमादि-स्वरूपेऽपि नालंकारोऽभिधीयते ॥ ७ ॥

१७ सौन्दर्यमेव काव्यात्मा न रीतिरिति वामनः ।

१८. गुणस्तु पूर्णतारूप-दोषाभावात्मकः परम् ॥ ८ ॥

१९. सर्वेषां दर्शनं सम्यग् दृष्टिभेदोऽत्र भेदकः ।

२०. काव्यं तु सार्वपार्षद्यं नास्तिक्यास्तिक्यतः पृथक् ॥ ९ ॥

२१. प्रमेयमात्र - निष्ठत्वं दर्शनस्यास्य दर्शनम् ।

अन्तश्चक्षुःप्रसादि स्यात् तटस्थानां मनीषिणाम् ॥ १० ॥

॥ श्रीः ॥

*सनातन-कवि-श्रीमद्-रेवाप्रसाद-द्विवेदिनः*
*स्वोपज्ञ-सस्कृतादि-विवृतित्रयालकृता*

# काव्यालंकारकारिका

तत्रादौ शिष्टजननेदिष्ठ मङ्गलमाबध्नीमः प्रस्तुवीमश्च काव्यस्य स्वोपज्ञ स्वालक्षण्य यौगपद्येन—

**आनन्दकोषस्योल्लासे लोकोत्तरविभावना ।**
**अलंकृतार्थसंवित्तिः कविता, सर्वमङ्गला ॥ १ ॥**

आनन्देति । सवित्तिश्चित्कलापरपर्यायो विमर्शः । ततश्च काव्यं विज्ञानमात्रमेव । सवित्तौ विशेषणम् अलकृतोऽर्थः । विशेषणत्व च विषयित्वेन तादात्म्येन च, अर्थस्यात्र सविदेकरूपतयैवाभ्युपगमात् । शब्दोऽप्यत्रार्थरूप एव सवित्सतत्त्वात् । सोऽप्यत्र जीवात्मनि स्थूलनिकायवद् उपाधिमात्रमेव प्रपञ्चयिष्यमाणेन नयेन । ततश्च नात्र तस्य संग्रहः । सा चेयं कविता सर्वमङ्गला निखिल-लोक-कल्याण-मूर्त्तिः, जगज्जननी हैमवती च "शर्वाणी सर्वमङ्गले"—त्यमरवचनात् । अभिन्नानुपूर्वीकपदवाच्यत्वेनाभेदाध्यवसानात् कवितापि सर्वमङ्गला हैमवती । ततश्च यथा हैमवत्या एवैकस्यास्तत्तत्त्व-प्रतिपादकत्व तथैव कविताया अपीति

## A. Definition

1. The 'KNOWLEDGE' [ or CONCEPT ] of an 'Adequate Sudject-matter' is Poerty. [ It is adequate as ] It possesses an outstanding power to make the BLISS sprung. It is a benediction launched for universe.

सकेत. । सर्वपदेनात्रोभयेषामपि सग्रह: वैदिकानामवैदिकाना च । अन्वाख्यानस्येव काव्यस्यापि सार्वपारिषद्यत्वात् । मङ्गल हि काव्यमास्तिकेभ्य इव नास्तिकेभ्योऽपि रसिकेभ्यः। तत्र वाङ्मयान्तरव्यतिभेदकम् 'अलकृति·' । सा च वक्ष्यमाण-लक्षणाऽलभाव-पर-पर्यायालकारमात्रात्मा । एव च विश्वमात्रमभ्यन्तरीकृत्य विभ्राजमानेय सर्वमङ्गला सविदेवालंकारमात्रैक-नेपथ्या काव्यभावमश्नुवीत, नेतरथा । अलकृतौ चास्या मानमनुमानम् । तत्र च हेतु: 'आनन्दकोषे'—त्यादि । आनन्दकोषो नाम वेदान्तादिप्रसिद्धा जीवात्मन आनन्दकला । तस्योल्लासे प्रतिबोधे लोकोत्तरम् अलोकसामान्यम् अनुत्तरपद-प्रतीत वा विभावनम् अपूर्वसृष्टि-प्रादुर्भावे अनामृष्टकारणकल प्रागल्भ्यम् । तदस्त्यस्या सा । सा चेय कविः सहृदयश्चेत्युभयसाधारणा । एव च बहि·प्रकाशिता-प्रकाशितोभयविध-काव्य-सग्रहः । अनिष्पन्नस्य निष्पद्यमानस्य वा कारणस्य कार्यजननासामर्थ्यात् तथाविधस्य काव्यस्याप्यानन्दकोषोल्लासकत्वाशक्यत्वम्, निष्पत्तौ पुन· कविकर्मण उपरमात् कवेरपि सहृदयमात्रत्वमेव । ततश्च कविरप्यत्र सहृदय एवानन्दकोषोल्लासे । प्रथमान्त्य-पदे अत्र मङ्गल्ये ।

संवित्तिरूपताया च चित्र मूर्ति· काव्य चेति त्रितयमप्यव्यतिरेकि, बहीरूपतायामेव तेषामेषामन्योन्यं घट-पटादिवद् व्यतिरेकस्य दर्शनात् ।

*उल्लासश्चैष त्रिविधः*

१. उपमादिविच्छित्तिविशेष-विषयकत्वेन,
२. श्रृङ्गारादि - रस-विषयकत्वेन,
३. वस्तुमात्र - विषयकत्वेन च ।

*तमिममर्थमेवं संगृह्णीमहे*

आनन्दकोषस्योल्लासस्त्रिविध· परिकीर्त्यताम् ।
औपम्यादि, रसं, वस्तु वा यतो विसिनोति सः ॥ १ ॥

अथ चात्रास्माक प्रणय

उल्लासस्त्रिविधोऽप्येष रसत्वेनैव कीर्त्यताम् ।
मात्रामात्रकृत भेदमवलम्ब्य हि भेदवान् ॥ २ ॥

इद चात्रोपस्कुर्वीमहि

आत्मवानर्थसघातविज्ञानं काव्यमिष्यते ।
आत्मा चालंकृति , सा च पर्याप्ति , तत्र हेतवः ॥ ३ ॥
औपम्यादिर्, गुणा, अर्थान्तर, वस्तूक्तिरेव च ।
वस्तूक्तिश्च विभावादिबन्धरूपा रसावहा ॥ ४ ॥
अर्थान्तर च यत् सोऽयमवाच्योऽर्थः, स च क्वचित् ।
लक्ष्योऽपि प्रोच्यते सद्भिर्व्यङ्ग्यश्चापि, परन्तु न. ॥ ५ ॥
शब्दवृत्तेरमान्यत्वादासु सज्ञासु नो रतिः ।
प्रतीयमानतामेकां त्रितयत्र तु मन्महे ॥ ६ ॥

ननु भोजदेवेन [1]रसोक्तिरिति, वक्रोक्तिरिति च परिभाषितयोरुक्त्योराद्या वस्तूक्तिरिति नाम्ना किमिति व्यपदिशन्ति, किमिति च परित्यजन्त्येव भवन्तो वक्रोक्तिमिति प्रश्न उच्यते—

रसोक्तिरिति या सज्ञा सा न युक्ता यतो, रस ।
कदापि नोच्यते शब्दैर् विभावाद्यर्थ - वाचकै· ॥ ७ ॥
वक्रोक्तिरिति शब्दश्च हन्त निर्विषयस्ततः ।
चतसृष्वासु[2] सोक्तिष्वेवाश्नुते विलयं यत ॥ ८ ॥
वस्तूक्तौ वस्तुशब्दस्तु विभावाद्येक—तत्पर ।
वस्तुनोऽन्यस्य कस्यापि काव्यत्वेनापरिग्रहात् ॥ ९ ॥

इति ॥ १ ॥

---

१ सरस्वतीकण्ठाभरणे ५ ८, शृङ्गारप्रकाशे च ज्योशेरसस्करणस्य ४३७ पृष्ठम्।

२. औपम्याद्युक्ति , गुणोक्ति , अर्थान्तरोक्ति., वस्तूक्ति रित्युक्तोना चतुर्विधत्वम् ।

A. The BLISS is based on

( i ) the varieties of speech like simile,

( ii ) the Rasa like śrgāra erotic and,

( iii ) the subject-matter alone,

B. All these three kinds of bliss may be called after 'Rasa' having differences in quantities

C. In other words

A Knowledge or Concept of the group of subject-matter reaches the stage of poetry if it does possess its 'SOUL'. Alaṃkāra is its soul and the Alaṃkāra is an 'Adequacy' of a particular nature Figures of speech ( like simile etc , Nature of words ( like softness or hardness called qualities under the names of Śleṣa etc ) 'The suggested property' and 'the bare subjectmatter' too are independent sources of this adequacy

( i ) The concepts drawn out in paintings and sculptures are also poetry as these are also subjective [K 127]. In their objectivity they may differ from poetry.

( ii ) The bliss is common to both poet and the enjoyer but while enjoying his own poem every poet transforms into the enjoyer or sahrdaya as such.

( iii ) Poetry is a benediction to the entire universe in the way of social thinking and is 'Haimavatī'—Pārvati in the way of mythical thinking. This Haimavatī of upnisads is enchanted as 'Sarvamangalā' in samskrta lexicons. [ K. 1 ]

लक्षणमुक्त्वा कारणमाह—

**कारणं प्रतिभा काव्ये, सा चार्थ-प्रतिभासनम् ।**
**प्रज्ञाकादम्बिनी - गर्भे विद्युदुद्योत - सोदरम् ॥ २ ॥**

ननु चक्रचीवरन्यायेन शक्ति-व्युत्पत्त्यभ्यासाना समुदिताना कारणत्व-मुदीक्षमाणा कथमत्रोपेक्ष्यन्त इति चेत् पण्डितराजन्यायेन तेषा प्रतिभा-विशेष प्रति कारणत्वमीक्षामहे, न तु काव्य प्रतीति गृहाण । यथा चैतत् तदनुपदमेव प्रतिपादयाम ।

अर्थप्रतिभासन नामादृष्टचरापूर्वकल्पितादिवस्तुदर्शनमपि। एतेन 'काव्य-घटनानुकूल-शब्दार्थोपस्थितित्व'[१] प्रतिभाया. प्रत्याख्यातम्, उपस्थितेः स्मृतिप्रायत्वात् । ततश्च भावि-वस्तु-विषयाणा रामायणादीनाम्, सामयिक-वस्तुविषयाणा हर्षचरितप्रभृतीनाम्, कल्पित-वस्तु-विषयाणा मेघदूता-दीनां च प्रतिभानिरूपिता जन्यता न क्षता । ततश्च "शक्तिरेव प्रतिभा प्रतिभैव च शक्ति"रिति शक्ति-प्रतिभयोरनर्थान्तरत्वसाधका , अर्थप्रतिभा-सयिता बुद्धिगतो गुणविशेष प्रतिभेति प्रतिभास-प्रतिभयोर्जन्यजनकभाव च सिषाधयिषवो राजशेखरादय [२] परास्ता. ।

### B. Source

2. Poetry springs in the only womb of PRATIBHA ( like the waves in water ) and Pratibhā is but a flashing of subject in the intellect, just like the flashing of lightening in the heavy clouds.

---

१. रसगङ्गाधरारम्भे ।

२ काव्यमीमासायाश्चतुर्थेऽध्याये भूयानस्य प्रपञ्च. । तत्र प्रतिभासूत्रम्—"या शब्दग्रामम् अर्थसार्थम्, अलङ्कारतन्त्रम्, उक्तिमार्गम्, अन्यदपि तथाविधम-धिहृदय प्रतिभासयति सा प्रतिभा" इति ।

कादम्बिनीसादृश्येन प्रज्ञाया सरसत्व पूर्णत्व च, विद्युत उद्योतस्य सादृश्येन च प्रतिभासन चित्रितम्। पूर्णत्वेऽपि कादम्बिन्या न केवल प्राकृतत्वम्—

स्मृतापि तरुणातप करुणया हरन्ती नृणा-
मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम्।
कलिन्दगिरिनन्दिनी - तटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी[1] ॥-ति

महामतिभिर्लोकोत्तरत्वेनाभ्यन्तरीकृत-समस्त-रसतया स्वातन्त्र्यशक्तिमेदुरिततया च साक्षात्कृतत्वात्, ख्यापितत्वाच्च—

यदुन्मीलनशक्त्यैव विश्वमुन्मीलति क्षणात्।
स्वात्मायतनविश्रान्ता ता वन्दे प्रतिभा शिवाम्[2] ॥

इति परावर-रस-तदभिव्यञ्जन-स्पन्द-क्रम-प्रत्यभिज्ञानविशुद्धमतिभिर् महामाहेश्वरैरपि प्रतिभात्वेन निरूपिताया प्रज्ञाया अस्या॰ परतत्त्वतया। अस्या अमुनैव च विशेषेण कवेरकविभ्यो व्यतिरेक.। स एव हि काव्य निर्मातु प्रभवति यस्य महामते प्रज्ञा तादृशैर् लोकोत्तरैस्तत्त्वैरापूरित-समस्तावयवा विद्योतते। अविनाभावोऽत्र विवक्षितः कादम्बिनी-विद्युदुद्योतयोः बिम्बरूपस्य श्रीकृष्णस्य स्वप्रतिबिम्बरूपाभिर्गोपिकाभिरिव[3] ॥ २ ॥

A. I. The above metaphor suggests that poetry can never be separated from pratıbhā and,

II. Intellect, the mother of pratıbhā ıs ever filled with smoothness, enlıghtenment and boundless dıvınıty

B. K. 10 [K 2]

---

१ रसगङ्गाधरमङ्गलम्।

२. ध्वन्यालोकलोचनप्रथमोद्योतान्ते।

३. श्रीभागवते १० ३३ १७।

प्रज्ञा-प्रतिभासौ कादम्बिनी-सौदामनीदृष्टान्तमुखेन परिचाय्य दृष्टान्तान्तरमुखेनापि परिचाययितुमितिहासमुपस्थापयाम —

**नारदादि-कृपापात्र-चेतोधातौ जगत्प्रभोः ।**
**प्रथमं स्व-स्वरूपस्य दर्शनं यत् तदीदृशम् ॥ ३ ॥**

ईदृशम् अर्थप्रतिभासनरूप-प्रतिभा-सदृशम् । नारदो हि प्राग्भवे भगवन्तमध्यायत् । सोऽपि च भगवान् भक्तस्यास्य हृदकोषे स्वकीया मूर्ति प्राचीकटत् । एष चानन्दसप्लवे मग्नतया तामिमा भागवती मूर्ति व्यस्मरत् । भूयश्चाशरीरया वच प्रवृत्त्या प्रचोदितोऽसौ भगवन्नाम गायन् जन्मान्तरे भगवन्त भूयोऽपि साक्षादकरोत् परिपक्वकपाय । तथा च श्रीभागवते—

तस्मिन् निर्मनुजेऽरण्ये पिप्पलोपस्थ आस्थित ।
आत्मानमात्मनात्मस्थ यथाश्रुतमचिन्तयम् ॥
ध्यायतश्चरणाम्भोज भावनिर्जितचेतसा ।
औत्कण्ठ्याश्रु-कलाक्षस्य हृद्यासीन्मे शनैर् हरि. ॥
प्रेमातिभर–निर्भिन्न–पुलकाङ्गोऽतिनिर्वृत· ।
आनन्दसप्लवे लीनो नापश्यमुभय मुने ॥
दिदृक्षुस्तदह भूय. प्रणिधाय मनो हृदि ।
वीक्षमाणोऽपि नापश्यमवितृप्त इवातुर ॥

**Example from Devotıon for Pratibhā.**

3. For this flashıng ( Pratıbhā ) one may remember the first sight of the Lord of universe ( God ) whıch was awarded by Hımself ın the very heart of Nārada and others, the objects of Hıs divine grace.

एव यतन्त विजने मामाहागोचरो गिराम् ।
हन्तास्मिन् जन्मनि भवान् न मा द्रष्टुमिहार्हति ।
अविपक्वकषायाणा दुर्दर्शोऽह कुयोगिनाम् ॥
प्रयुज्यमाने मयि ता शुद्धा भागवती तनुम् ।
आरब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिक ॥
सहस्रयुगपर्यन्ते उत्थायेद सिसृक्षत ।
मरीचिमिश्रा ऋषय प्राणेभ्योऽह च जज्ञिरे ॥
प्रगायत स्ववीर्याणि तीर्थपाद प्रियश्रवा ।
आहूत इव मे शीघ्र दर्शन याति चेतसि ॥ इति ।
( प्रथमस्कन्धस्य षष्ठेऽध्याये )

अत्र प्रथमसाक्षात्कारे स्वयभूत्वमेव निदानम्, भगवत्कृपाऽपरपर्यायिम् । एतेन प्रतिभाया पञ्चम्या कारिकया वक्ष्यमाण स्वयभूत्वमत्र कटाक्षितम् । भागवते दर्शने कषायपरिपाकोऽनन्याभियोगश्च निदानम्, काव्यौपयिके वस्तुदर्शने पुना रजस्तमसो· परिपाक· सत्त्वोद्रेकश्चेति वक्ष्यामः षष्ठ्या कारिकया ॥ ३ ॥

I. Thus runs the episode of Nārada

Nārada was sitting all alone under the holy fig tree in a jungle inaccessible to any human being He was meditating on his own soul whithin him and was wet with tears God appeared at once in his heart but as he was sunk in an immence bliss, he could not see Him Again he saw Him in his next birth [ Bhāgavata I 6 ]

II The example of Nārada and the first sudden appearance of God in his heart guides towards the 'reasonlessness' of Pratibhā [ K v ] [ K 3 ]

कविप्रतिभामेव दृष्टान्तान्तरेणोपपादयाम·—

**समाधौ योगलग्नानां हृदये विषयान्विता ।**
**ज्योतिष्मती प्रवृत्तिर्या तत्स्वसा प्रतिभा कवेः । ४ ।**

समाधौ समाधिरूपचित्तवृत्तिनिरोधोपक्रमे समाधिपादे चेत्यर्थ । तत्र चेतोधातोरेकाग्रतायै सुख-दु.ख-पुण्यापुण्य-विषयकाभिर् मैत्री-करुणा-मुदितोपेक्षाभिश्चित्तवृत्तिप्रसादने सवृत्ते तस्य स्थिरीकरणाय द्वारीभूता नासिकाग्रादिषु या दिव्यगन्धादिसवित् सा विषयवती सवित्प्रवृत्ति , या च तत्र दु खलेशेनाप्यस्पृष्टा भास्वरता सा ज्योतिष्मती प्रवृत्ति । यदाह भगवान् पतञ्जलिर्योगशास्त्रे—

मैत्री-करुणा-मुदितोपेक्षाणा सुखदु खपुण्यापुण्यविषयाणा भावनातश्चित्तप्रसादनम् [ सू० १ ३३ ] इति,

विषयवती वा प्रवृत्तिरुत्पन्ना मनस· स्थितिनिबन्धनी [सू० १ ३६] इति,

विशोका वा ज्योतिष्मती [ सू० १ ३६ ] इति च ।

अन्यच्च तत्रैव—

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृ-ग्रहण-ग्राह्येषु तत्स्थतदञ्जनतासमापत्ति [ सू० १.४१ ] इति,

Example from Yoga for Pratıbhā

4. The flashıng ın poet ıs a sıster of that very mental state whıch sprıngs forth ın the keenest concentratıon of yogıns and ıs called 'VIṢAYAVATĪ' assumıng some uncommon and extraordınary but un-subjected subȷect, and JYOTIṢMATĪ : Lusturous ın Samādhi [ also a chapter of Patañȷalı's Yogasūtra. ]

तत्र शब्दार्थविकल्पैः सकीर्णा सविकल्पा समापत्तिः [सू० १ ४२] इति,
ता एव सबीज. समाधि· [ सू० १.४६ ] इति,
निर्विचारवैशारद्येऽध्यात्मप्रसाद. [ सू० १ ४७ ] इति,
ऋतम्भरा तत्र प्रज्ञा [ सू० १.४८ ] इति,
प्रातिभाद् वा सर्वम् [ सू० ३ ३३ ] इति,
हृदये चित्तसवित् [ सू० ३.३४ ] इति,
तत प्रातिभ-श्रावण-वेदना-दर्शास्वाद-वार्ता जायन्ते [ सू० ३.३६ ] इति च ।

स्वसृत्वेन योगिना कवेरपि साम्य प्रतीयेत, आत्यन्तिकाभिन्नत्वा-भावश्च । तेनाभिन्नत्वेऽपि न दोष· । दृश्यन्ते हि शङ्कराचार्यप्रभृतयः, शुकदेवप्रभृतयो वा योगिनोऽपि कवय । योगिदृष्टान्तेन काव्यार्थाना लोकोत्तरत्व प्रज्ञैककलेवरत्व च स्थित समधिकरसनीयत्वसध्री-चीनम् ॥ ४ ॥

(i) For Visayavatī Y S -I 36

(ii) For Jyotismatī Y. S -I. 37

(iii) For Pratibhā in general Y S - I 41, 42, 46–48, III 33, 34, 36

(iv) The word sister suggests the difference between the two the pratibhā of poets and the Pratibhā of yogins A yogin may assume the pratibhā of poet like Śankarāchārya or sage Śukadeva Some times the poet may also attain the stage of yogin but not invariably

(v) Subjects ( and not objects ) which are only mental and not external in both the cases in Yoga and in Poetry [K 4]

प्रतिभामेव विभजामहे—

**स्वयंभूश्च सहेतुश्चेत्यसौ लोके द्विधा स्थिता ।**
**आदिमाऽऽदिकवौ दृष्टा द्वितीयान्यत्र दृश्यते ॥ ५ ॥**

द्वितीयकारिकया कादम्बिनीविद्युतो प्राकृतिकेन दृष्टान्तेन, तृतीयकारिकया नारदहृदये भगवत्त स्वत्त एव स्वरूप-प्रकाशस्य च पौराणिकेन दृष्टान्तेन व्याख्यातचरमेव प्रतिभाया. स्वयभूत्वम् । एतच्चाधुनिकेष्वपि न नावलोक्यते। योगिराजान् श्रीगोपीनाथ-कविराजानुपेत साम्प्रतमपि स्मरामो वय देशान्तरीय कचिद् अश्रुतपूर्वानपि मिश्र-देशपिरामिडान् दिवैव जाग्रदवस्थायामेव चित्र-पट-प्रकाशितानिव ददृशिवास युवानम् । स्मश्च वयमपि ददृशिवासस्तास्तानश्रुतपूर्वान् ग्रन्थान् स्वप्नेष्वनेकश । अस्ति चात्र नारदवदेव वाल्मीकिदृष्टान्त । तस्य हि भगवतो निषादविद्धाण्डज-दर्शनोत्थ शोक एव "मा निषादे"त्यादिनाऽतिशयोक्तिकरुणरस-वस्तुसम्पदु-त्तमाऽगुणीभूत-प्रतीयमानता-सुभगेन पद्यकाव्यात्मना पर्यणामि[१] ।

अन्यत्र कालिदासादिषु । निष्प्रतिभोऽपि यो जगदम्बिकाप्रसादान्महाप्रतिभ सिद्धकविरेव न, साक्षात् पार्वतीजानिरेव यावत् सवृत्त स

### Types of Pratibhā

5. This flashing is of two types 'Svayambhū' = self-begotten and 'Sahetu' = begotten with cause in the world. First had been seen in the first Poet ( Vālmīki in India ) and other is being seen in other poets.

---

१. रामायणे बालकाण्डस्य द्वितीये सर्गे, रघुवशे १४.७०, ध्वन्यालोके च १५ कारिका तल्लोचने च। द्रष्टव्योऽत्रास्माक ग्रन्थ 'आनन्दवर्धन' १०२-१०६ पृष्ठेषु ।

एवास्माक [१]भगवदनुग्रहपवित्र-वाक्त्वेन महामाहेश्वरैरभिनवगुप्तपादैर-भ्यर्चित. कुमारसम्भवादिविधाता कालिदासो नाम। श्रूयत एव हि शारदाया प्रसादो नलचम्पूविधातरि त्रिविक्रमे श्री-श्रीहर्षे च "तच्चिन्तामणिमन्त्रचिन्तनफले श्रृङ्गारभङ्ग्या महाकाव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गत" इति. "तस्य द्वादश एष मातृचरणाम्भोजालिमौलेर् महाकाव्येऽय व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वल" इति च कश्चित् स्वयमेव कण्ठरवेणैवोल्लापिनि महाकवौ ॥ ५ ॥

I Vālmīkı, as narrated ın the Rāmāyana I-2 canto, saw a mating he-curlew shot down by a hunter, tossing ın blood and wailing with separation from its mate too At this tragic sight the sorrow of the sage found a spontaneous expression ın metrical form 'मा निषाद॰' etc This un-premeditated composition is really a result of ıntuıtıon not begotten with cause

II The great craftsmanship of Śrıharṣa ıs an example of the ıntuıtıon or Pratıbhā begotten with cause In his own words his Naısadhīyacarıtam ıs a result of his Tāntrıka austerıties [ N. C. last verses of canto 1 and 12 ] [ K 5 ]

१ अभिनवभारत्या षष्ठेऽध्याये बडोदासस्करणस्य ३०७ पृष्ठे प्रथमपङ्क्तौ ।

सहेतुप्रतिभाया पूर्वाचार्यप्रतिपादित-हेतु-व्यतिरिक्त हेतुमुपतिष्ठापयिषन्तो ब्रूमहे—

**द्वितीया या भवन्त्यत्र करणानि बहून्यपि ।**
**कारणं तु भवत्यत्र सत्त्वोद्रेको हि केवलः ॥ ६ ॥**

द्वितीया सहेतु प्रतिभा । करणानि व्यापारवन्त्यसाधारणानि कारणानि । बहूनि अदृष्टम्, व्युत्पत्ति, अभ्यासश्चेति त्रयाणा काव्यप्रकाशकृतोक्तेन चक्रचीवरन्यायेन, रसगङ्गाधरकृतोक्तेनादृष्टस्य तृणारणिमणिन्यायेन, व्युत्पत्त्यभ्यामयोश्च चक्रचीवरतया सकरससृष्टिभ्या, गुणत्रयवद् वा व्यामिश्रणात् केवलत्वाच्च बहुत्वम् । तत्र काव्यप्रकाशमते सर्वेषामेषा साक्षात् काव्य प्रत्येव कारणत्व, पण्डितराजमते च प्रतिभा प्रति । अस्मन्मते पुन प्रतिभा प्रत्यप्येतेषा करणत्वमेव । ततश्च पण्डितराजमते काव्य प्रति येषा पितामहत्वम्, अस्मन्मते तेषा प्रपितामहत्वमिति भेदः । ननु पण्डितराजवदेव शक्ति-व्युत्पत्त्यभ्यासाना मध्ये शक्ते स्वातन्त्र्येण, व्युत्पत्त्यभ्यासयोश्च समुदितत्वेन वा तन्त्रत्वमूरीक्रियतेऽन्यथा वा कथचिदिति चेत्, नान्यथा, केवलम् अभ्यासस्यैव व्युत्पत्तिभिन्नत्व तु न पश्याम । काव्यकरणाभ्यासस्यापि व्युत्पत्तित्वमेव ज्ञानत्वरूपम् । यदि वा अभ्यास पौनपुन्येन प्रवृत्ति । सा च व्युत्पत्ति प्रति व्युत्पत्तिश्च शक्तिवदेव प्रतिभा प्रति करणमिति शक्तिरदृष्टरूपा व्युत्पत्तिश्चेत्येतद्द्वयस्यैव करणत्वम् ।

## Main cause of second Pratibhā

6 For the second one i. e. Sahetu Pratibhā causes of cause : Karanas may be numerous, but the Kārana i direct cause is only one and that is Sattvodreka : upraisal of the sattva-guna or the flashfulness in mind.

ननु यदि शक्तिव्युत्पत्त्यो करणत्व तर्हि कारणत्व कुत्रेति चेत् "सत्त्वोद्रेक" इति गृहाण । शक्ति', व्युत्पत्तिश्चोभयविधा सत्त्वमुद्रेचयत, तत्र च प्रतिभोद्योत । सत्त्वोद्रेकस्यापि निमित्तत्वमेव, न जनकत्वम्, सत्यपि तस्मिन् प्रतिभोद्द्योतस्यादर्शनात् । नहि कादम्बिनी वर्त्तत इति तत्र विद्युतो द्योता वर्त्तन्त एव नान्तरीयकत्वेनेत्यस्ति नियम' । सत्यामपि विद्युति तस्गा उद्योतस्य वैकल्पिकत्वात् । यश्चासावस्या उद्योतस्तत्कल्पैव चास्माक प्रतिभेति द्वितीययैव कारिकया स्पष्टम् ।

ननु यदि शक्तिव्युत्पत्ती एव प्रतिभाहेतू तर्हि बहूनीति बहुत्व किमूलमिति चेद् भर्तृहरि पृच्छ "स्वभावा"-द्युपपादितत्वेन [३५ कारिकाविवृतौ] वक्ष्यमाणान् षड् हेतूनुपन्यस्यन् । अस्मन्मते तेषामदृष्ट-व्युत्पत्त्योरेवान्त -पातः ।

तत्रादृष्टरूपा शक्तिरपि द्विविधा, जन्मान्तरीया, महापुरुषादिप्रसादजन्या चेति । एवमेव व्युत्पत्तिरपि द्विविधा विविधकोषकलाद्यवबोधरूपा, काव्यकरणाभ्यास-जन्य-कौशल्य-स्वरूप-बुद्धि-वैशारद्य-सतत्त्वा चेति । ततश्चात्र सुस्थमेव बहुत्वम् । अन्वयव्यभिचारवारणाय कार्यकारणतावच्छेदकतायुग्म वैलक्षण्येऽभिनिवेश्य सुखेन श्वसितव्यम् ।। ६ ।।

I Intense study ( vyutpattı ), practıce and the ımagınatıve power are the maın factors known for the productıon of poetry

Mammata ( 1100–1200 A. D. ) admıts 'the combınatıon of all these three begets Poetry'.[1]

Jayadeva ( 1200–1300 A D ) gıves promınence to the Pratıbhā, ıntuıtıon or the ımagınatıve power and admıts the practıce and study as ıts auxılıarıes.[2]

---

1 K P 1 3

2, Candrāloka 1.

Jagannātha ( 1700 A D ) turns down this tradition and accepts that —

the Pratibhā is the only factor of poetry and all the three–

i study

ii practice and

iii power

are the begetors of Pratibhā only and not of poetry itself

These three are further divided by him into two groups one of power alone and other of the combination of the remaining two [1]

The imaginative power is named by Jagannātha as Adrsta which is something ambiguous where as our 'Sattvodreka' has its solidity and concreteness At the same time it is a glory accepted and experienced by Yogins as well as by most of us who do or do not practice austerities etc , necessary for an adrsta accordidg to mīmāmamsakas and others.

II. For other factors of Pratibhā see the gloss of K. 35.

[ K. 6 ]

1 Rasagaṅgādhara ch 1, Page 9-10 Nirṇaysāgara ed 1947.

काव्यगतवैचित्रीहेतुक सत्त्वोद्रेकस्य, तद्गत वैचित्रीहेतुक च प्रतिभाया वैचित्र्यमनुभवन्तो ब्रूमहे—

रजस्तमोऽनुवेधानां संख्यातीता तु या स्थितिः ।
उद्रेकोऽप्यनया सोऽयमतिवैचित्र्यमश्नुते ॥ ७ ॥
एकस्यापि कवेः काव्य-प्रबन्धे येन दृश्यते ।
बन्धभेदो मधूद्याने वृक्ष-श्री-भेदसोदरः ॥ ८ ॥
ततश्च प्रतिभाभेदोऽप्येकस्मिन्नपि दृश्यते ।
कवौ, किं विद्युदुद्योतः स्यात् सदैवैक-सौभगः ॥ ९ ॥

अतिवैचित्र्य सख्यातीत वैलक्षण्यम् । यदुच्यते ध्वनिकृता-
वाचस्पति-सहस्राणा सहस्रैरपि यत्नत. ।
निबद्धा सा क्षय नैति प्रकृतिर्जगतामिवे ।।-ति ।

Complexity of poetic crafts and Pratibhās :

7. Due to the in-numerable differences in the preportion of the mixture of Rajas, functioning of mind, and Tamas, functionless-ness of mind [ with Sattva, flashfulness of mind ] this Udreka ( Sattvodreka ) too assumes innumerable shapes.

8 Hence the craftsmanship in one and the same book of the same poet is often seen in different types, like the lustre on trees in a garden in spring. [ DH III. 37, IV. 4, ]

9 And therefore even in the same poet differences of Pratibhā are also felt Do the sparklings of lightening retain the same splendour for ever ?

प्रकृतेश्चातिवैचित्र्य साख्यै स्वीकृतचरमेव ॥ ७ ॥

मधूद्याने वासन्तिक उपवने। तत्र हि किसलयकुसुमादिसुषमा प्रतिवृक्ष भिन्नभिन्ना ॥ ८ ॥

एव च सत्त्वोद्रेकस्य वैचित्र्येण प्रतिभाया वैचित्र्यमपि सूचितम्, स्वभावसिद्धैव हि कारणगुणाना कार्यशरीरे सक्रान्ति॰। एतच्चवैचित्र्य प्रबन्धकाव्येषुप्रायेण प्रतिपद्य प्रतिसर्ग चावलोक्यते। तथा हि नैषधीयचरिते भिन्नैव काचित् प्रतिभा प्रथमतमे सर्गत्रये भिन्नैव चाष्टमनवमयो:, भिन्नैव चैकादश-द्वादशयो। एकोनविशे पुनरन्यादृश्येव बन्धगति॰। रघुवशेऽपि द्वितीये सर्गे यो बन्ध, यश्चाष्टादशे तयोर्भेद॰ कस्य वा न गोचर.। तथैव च कुमारसम्भवस्य तृतीयपञ्चमयो- सर्गरत्नयो चतुर्थषष्ठसप्तमाना च भेदः। अत एवोक्तमानन्दवर्धनाचार्यै:

सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महता कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्त प्रतिभाविशेषमि ॥-ति।

"विद्युदुद्योत. कि सदैवैकसौभग" इति तस्यास्य प्रतिभागतस्य प्रतिक्षण परिस्फुरत परिणामभेदस्य पटिष्ठो दृष्टान्तः ॥ ९ ॥

a Ānandavardhana declares —
The evergreen realm of Poetry and Nature is countless even for the millions of Lords of Goddess of learning =DH. IV 10.

b. DH. I 6.

c The differences in the same epic are obvious in the cantos 1, 9, 10, 12, etc. of N C. so also elsewhere.

[ K. 7, 8, 9 ]

ननु प्रतिभा चेत् काव्यस्य कारण तर्हि समवाय्यसमवायिनिमित्तेषु कीदृग्विधत्वमस्या इति प्रश्ने ब्रूमहे—

**उपादानं निमित्तं च काव्याय प्रतिभैव सा ।**
**द्वितयं गर्भमात्रे यत् तस्यास्तिष्ठति तत् सदा ॥ १० ॥**

उपादानत्व नाम समवाय्यसमवाय्युभयत्वम् । द्रव्यस्यैव समवायित्व-नियमान्निमित्तत्वमपि, प्रतिभाया ज्ञानैकरूपत्वात् ज्ञानस्य च गुणत्वात् । सेय न्यायनीति । दर्शनमात्रसग्रहाय तु उपादानशब्द-ग्रह । ननु कथमेवमुच्यते काव्य प्रतिभाया गर्भान्न कदाचिदपि बहिरायातीति, बहिर-नायातमिद कथमिवान्यैरनुभूयेत, अनुभूयते च तदिति चेत्, सत्यम्, काव्यग्रन्थान् हि बहिरनुभवाम , न तु काव्यम् । अन्यद्धि ग्रन्थत्वम्, अन्यच्च काव्यत्वम् । ग्रन्थत्व हि शब्दबन्धविशेषस्तास्तानर्थबन्धानाश्रित्य सदृभ्य-माणशरीर. । काव्यत्व पुनरर्थज्ञानत्वम् । यथैतत् तदग्रे स्फुटमुपपाद-यिष्याम. । शब्दे काव्यत्वभ्रमस्तथैव यथा लिपि-कर्गदबन्धे ग्रन्थत्वभ्रमः । अस्तु वा ग्रन्थस्यापि काव्यवदेव विज्ञानमात्रत्व शब्दस्य च तत्प्रतिबिम्ब-ग्राहकस्य बहि प्रकाश , लिपिविशेषस्येव ग्रन्थप्रतिबिम्बग्राहकस्य । नन्वेव सर्वेऽपि वय कवय., सन्त्यस्मासु प्रतिभा , सन्ति च तासु काव्यानि, प्रतिभैकनिष्ठत्वे काव्यस्य कविव्यतिरिक्तप्रकाशाभावात् । प्रकाशाभावे च विनिगमकविरहात् कथमुच्येमहि न स्मो वय कवय इति ? साधु । द्विविध हि प्रकाशनम् अन्तरङ्ग बहिरङ्ग चेति । तत्र यद् आद्यं तन्मानसम् अलकृतार्थसार्थसवित्स्वरूपम् । यच्च द्वितीय तच्छब्दबन्ध-

**Constituent and auxiliary cause of Poetry ।**

**10. For the Poetry Pratibhā is the only cause of both the natures.constituent and auxiliary, as the eternal existence of poetry is only in the wobm of Pratibhā**

स्वरूप लिपिबन्वस्वरूप वा शब्दबन्धौपयिकम्। तत्र प्रथमस्य न कथमपि बहिरङ्गत्वम्, सविदो बहिरङ्गत्वासम्भवात्। एव सति सन्त्येव भवन्तः कवयो यदि नासत्यवादिन । शिष्टानामय पन्था, न दुर्दुरूटानाम्। ये हि प्रतिभामात्र-गर्भगस्य काव्यस्य सत्त्वे शङ्किन ,कथमिवैते नाशङ्किन. क्षित्यङ्कुरादिव्यवस्थित-सृष्टि-कर्तु· परमेश्वरस्यापि सत्त्वे, सत्त्वे च वैचित्र्य-मूलानामदृष्टानाम् परलोकाना पुनर्भवाना च नन्मूलानाम्[१]। अलमेतया प्रसक्तानुप्रसक्तचिन्तया काव्यदर्शन व्याहृत्य ॥ १० ॥

I. K 2

II Hence one has to realise the differece between the two-

( i ) Poetry and

( ii ) its composition in outer craft as such i e sound or utterance.

Sound is as different from poetry as the script from the language or the script itself from the paper, which it is written on [ K 91 ]

III. The expression is also of two kinds

Inner and

Outer

The former is subjective whereas the latter one is objective i. e. reflexed in the script, sound, etc

[ K. 10 ]

१. सवृत्तिके न्यायकुसुमाञ्जलौ ५ १, १ ४,
भक्तिरसार्णवे ५–१३ पृ०

एव काव्यस्य हेतु प्रतिपाद्य प्रयोजन विकल्पयाम —

**प्रयोजनं कवेः काव्ये नापि किंचन दृश्यते ।**
**चुङ्कृतौ कलविङ्कस्य यथा प्राभातिके क्षणे ॥ ११ ॥**

अपिना काव्यस्य सप्रयोजनत्वमपि सगृहीतम् । कवे. न तु रसयितुः प्रयोजनानि च "यशआदीनि" । यदुक्त काव्यप्रकाशकृता-

काव्य यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्य परनिर्वृतये कान्तासमिततयोपदेशयुज ।। इति ।

वक्ष्यते चास्माभिरपि कान्तासम्मितोपदेशान्तर्भुक्त समाजसरक्षणादिकम् । प्रयोजनाभावे पुन. प्रभातकलविङ्कदृष्टान्त. । कलविङ्कश्चटका । न हि चटका प्रभाते चणक-कण-लाभ-चुङ्कार-मुखरा भवन्ति । स्वभाव एव हि स तस्या , चन्द्रिकामापीय सरस्वत इव । एव च प्रत्याख्याताः प्रयोजनैकदृश प्राचीना. ।। ११ ।।

## C. Purpose

### Purpose of Poetry

11. **While composing poetry, the poet, sometimes does not have any idea of benefit and return therefrom. The outburst of poetry is just like the singing of bird at the sweet moment of dawn.**

I. Some times the composition of poetry has some purpose like Fame, Wealth, Termination or prevention of calamities ( for poet ), Knowledge, Bliss without delay and Courtious advice like that of beloved one ( for the reader )

[ K P I 2. ]

II. Sudden out-burst of poetry is explained in the next Kārikā Spontaneous or unpremeditated compositions may reach to this stage of purposelessness or to the famous 'Niṣkāma-karma-yoga' of the Gītā. [ K 11

प्रयोजनाभावमेव समर्थयितुकामा निदर्शनान्तरमुपस्थापयामः—

**एषणा-त्रितयोत्तीर्णे रामायण-महाकवौ ।**
**आत्माविष्कार-नैष्कर्म्य-नैसर्गी किं प्रयोजनम् ॥१२॥**

एषणा हि त्रिविधोच्यते लोकैषणा, वित्तैषणा पुत्रैषणा चेति । नास्ति च तासामेकापि वीतरागे पूर्णकामे च दृष्टपरावरे भगवति वाल्मीकौ । जग्रन्थ चासौ सीताचरित नाम पौलस्त्यवधरामायणाद्यपरपर्याय लौकिकमादिकाव्य छन्दस्वतोभिर्वाग्भि । किन्न्वत्र प्रत्येतव्यम् अन्यत्र स्वाभाव्यात् । नैष्कर्म्य नाम फलासक्तिवर्जित कर्म । यदुक्त स्वकीयासु गीतोपनिषत्सु भगवता श्रीकृष्णेन—"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुत" इत्यारभ्य "तस्मादसक्त सतत कार्यं कर्म समाचर, असक्तो ह्याचरन् कर्म परमाप्नोति पुरुष" इत्यन्तेन पञ्चदशश्लोकात्मकेन सन्दर्भेण तृतीयाध्यायारम्भे । नैष्कर्म्यमेव नैसर्गी निसर्ग. स्वभाव. । अप्रयोजन हि सा भगवत आदिकवे. ॥ १२ ॥

Authority on Poet's purposless-ness in composition :

12. Can the nature of self-expression, free from attachment be taken as an aim of return in the greatest poet of the Rāmāyana, Vālmīki, a sage who had overcome all the three cravings ( craving of family, of wealth and of fame )

I. Gīta III 4 Naiskarmya
Total renouncement of selfish-desire [ Dr. R. ]
Spritual transformation of mind [ Śrīdhara ]

II. Also Gīta III 5–9. [ K.12 ].

प्रयोजनान्येव प्रपञ्चयाम —

**युगावश्यकतापूर्त्ति-मन्त्र व्यक्तिरपि क्वचित् ।**
**प्रयोजनं, रघुव्यक्तौ रघुवंशे यथा कवेः १३॥**

रघुवशनामके द्वितीयदिलीपादारभ्याग्निवर्णपर्यन्त विवस्वदन्ववार्यं विषयीकृत्य रचिते महाकवे· कालिदासस्य सर्गबन्धे रघुरेव नायक । तत्र दिलीपसुदक्षिणयोस्तत्सभवाय, अजदशरथादीना च तत्सभवगत-वैलक्षण्याभावप्रतिपत्तये निरूपणानि । आसीदेव हि दशरथकालेऽपि अग्निवर्णकाल-सदृश्येव वशविलोपस्थिति· । अयमेव हि तत्र विशेषो यदेकत्र भागवती कृपासुधा वशमिममुदजीवयत्, अपरत्र च गर्भाभिषेकदुरन्ततैव स्थिता–श्रुकलुषा । रघुश्च विक्रमादित्यादिसमये शकाद्युत्पातप्रशमाय सर्वविध-गृहस्थ–स्वाधीन समाधि·, कार्तिकेय इव तारकक्षयाय कुमारसभवे । तदेतत् प्रत्यपाद्येवास्माभि: स्वकीये "कालिदास· : मानवशिल्पी महाकवि" इति विद्वज्जन–पुरस्कृते सदर्भे । मन्वादिप्रतिपादितचरस्य युगावश्यकता-पूर्तिमन्त्रस्यास्य व्यक्तिमात्रं कालिदासादिकाव्याधीनम्, न तु नवीना सृष्टि· । ततश्चाय कान्तासंमित उपदेश एव प्राचीनानाम् ॥१३॥

### The greater cause of Poetry

**13. In poetry, some where the suggestion of the secrets to salve the problems of present age is also aimed at, like the well planned birth of Raghu in the epic Raghuvamśam [ of Kālidāsa ].**

I Raghuvamsa had been written some-times when the foreign invaders were attacking Indian continent. Raghu is such a mighty son of India who makes Indras aweful weapon futile on his chest. In his Raghuvamsa Kātlidāsa suggested the path 'how can such a

hero become available for a needy nation' Kumārasambhavam and Śākuntalam too deal with the same theme[1]

II. Only Raghu is the hero in the whole cycle of his line in kālidāsas Raghuvamsa Rāma, an incarnation of God is a proof that man had become weak after Raghu[2]

III Kālidāsa is a National poet His method of planning or technique is Indian but his following message is open for entire humanity–

a Your mighty weapons are meant to protect and not to strike at the innocents.[3]

b May all enjoy every where[4] [ Vikr. 5 15 ]

[ K 13 ]

1. My introduction to Kālidāsagraothāvalī 1976, Banaras Hindu University, PP. 35–36

2. My footnote in K. G. PP. 103, 254

3 Raghuv. 8 31., Śāku 6 27.

4 My introduction to K G. P 38.

अधर्मोत्थानवेलायां धर्मरक्षापि दृश्यते ।
काव्यार्थस्तुलसीकाव्ये यथा यवन शासने ॥१४॥

तुलसीकाव्ये गोस्वामितुलसीदासनाम्नो भाषाकवेर्महात्मनो रामचरितमानसादि-रामचरिताश्रिते बहुविधे साहित्ये । यवनाना यवनेषु च शासके । एव च यवना भारतीयेषु शासका आसन्, यवनेषु च तुलसीकाव्यम् । ततश्च यवनाना कूटबहुलेऽपि दु शासने रक्षितः कथञ्चिद-त्रभवान् सनातनो धर्मवृष । तदित्थमुपनतमस्माक साहित्यविद्यायाः शासक-शासकत्व कान्तासमिततया ॥ १४ ॥

The religiou, cause of Poetry

14. The Protection of Dharma [ —Philosophy, Constitution, Penal-code and Devotion to Omnipresent with nonviolence, truth, etc. ] in the contrary anvironment, is also aimed in some of the poetic compositions, as in those of sage **Tulasīdāsa** ( 1600 A. D. ) when the Moghal dynesty was in rule, but for the Hindus the literature of **Tulasī** was proved the ruler of the rulers

I The literature not only of Tulasīdāsa's but of all the conscious writers brings forth the national property in each sector.

II. Here we may remember the revolutions of some great countries and the impact of literature there-on.

[ K. **14** ]

इदानी सुमहत् प्रयोजन प्रस्तुम —

राष्ट्र देव-प्रबोधोऽपि विश्वदैवत-साक्षिकः ।
काव्यप्रयोजनं पुंभ्यः पुमर्थाश्चतुरो दुहन् ॥ १५ ॥
इदंप्रयोजने नाट्याचार्यस्य भरतस्य नः ।
वेदशास्त्रे प्रयोगाश्च तदाश्रित्य प्रवर्त्तिताः ॥ १६ ॥

प्रतीततमो हि हरिप्रबोधो भारतीयेषु । तत्र राष्ट्रमेव देव., राष्ट्रदेवाश्च वयम् । तस्यास्य महतो देवस्य प्रबोधोऽपि काव्यस्य परमं प्रयोजनम् । अ-निरपेक्ष-विश्व-व्यक्तिक च तत् । ततश्चैकत चत्वार पुमर्था , अपरतश्च विश्वमङ्गल राष्ट्रविष्णो प्रबोधपर्वणि वैदिकाना जोघुष्यमाणो मन्त्र । स एव च सर्वपारिषद्यस्य भगवत. काव्यपुरुषस्य सर्वस्वम् ॥ १५ ॥

अतएव च जम्बूद्वीपे देवदानवराक्षसाभिधैर्वैदेशिकै समाक्रान्ते, शूद्रताभूयिष्ठे मनुष्यलोके, मोघवृत्तौ च वेदव्यवहारे धर्म्यम्, अर्थ्यम्, यशस्य, सोपदेश्य, सर्वशास्त्रार्थसपन्न, सर्वशिल्पप्रवर्तक सर्वकर्मानुदर्शक च पञ्चम नाट्याख्य वेद सेतिहास प्रणिनाय प्रयुयोज च शतेन पुत्रै·

The greatest purpose of Poetry

15 The awakenig of the Greatest God-Nation may be another purpose of poetry, if it ( awakening ) is observed by the deity Universe and if it offers all the four ultimate goals of personal life of human–beings

16 This was the purpose for which the poneer of Indian dramatury, Bharate amalgameted the vedas ( Vidhi = Instruction ) and propagated the dramaturgy ( Definitions ) with the staging based on both of them [ N. S I ]

भरतः। तस्यास्य वेदस्य यो विधिभाग. स वेद , यश्च लक्षणादिभागः तच्छास्त्रमिति वेदशास्त्रे इति शब्दः। यथा चैतत् तद् भरतनाट्यशास्त्रस्य प्रथमादध्यायात् स्पष्टभूयिष्ठमेव। तदित्थ विश्वबन्धुत्वविधृता राष्ट्रियता हि सयमधनानामस्माक भारतीयाना परमो मन्त्रः। अत एवावोचाम सीताचरिते—

विश्वदैवतमुपास्य कार्मण यस्तु वाञ्छति चराचरप्रियम्।
तेन पादपनिभेन केवला पूज्यतेऽनुपहिता परार्थता ॥ ३।३० ॥
आवयोर्हृदयदुग्धसिन्धुनोत्थापितोऽयमनुराग—नीरदः।
दुर्दिनेष्वपि चिराय सक्षमो विश्वतापहरणाय जायताम् ॥३।१८॥
धिक् कोऽयं निजरुचिनामको जनानां विश्वस्मिन् मनसिशयोस्ति भेदहेतुः।
येनेद जगदखिल समुद्र-शैल-नद्याद्यै शकलितमेकता न याति ॥५।१०॥
एते ये भुवनतले चितेर्विकासा दृश्यन्ते निपुणतर विभिद्यमानाः।
सर्वैस्तै सहचर-सोदरै. समेता भ्राम्याम. किमिति वियोगमाप्नवाम॥५।११
हिमगिरिगुरुश्रृङ्गतः पयोधेर्गहनतमावट-गह्वराणि यावत्।
निखिलमपि निजार्यभूमिवक्षो निजमृदुतल्पममस्त भूशयाना ॥६।४२॥

इति भूम्ना। एतच्च सर्वं कविप्रयोजनम्। यच्च सहृदयप्रयोजन तदग्रे वदाम ॥

I. It is said in the first chapter of Bharata's N S that the foreign invaders disturbed all the cannons of Indian life and they were reinstalled with the help of the staging, dancing, music, etc based on the vedas.

II. The awakening of Gad Visnu on the 11th, 12th, or 15th day of kārtika is famous in the Indian literature [ Meghadūtam II 47, Raghuvamsam X 6 My note on the latter one in K G Page 175 ]

III For the universalised Nationality one may enjoy the verses III. 30, 18, V 10, 11, VI 42 of my epic Sītacaritam [ K 15 ,16 ]

साम्प्रत सहृदयप्रयोजन निरूपयाम —

**न स्यात् प्रयोजनं स्याद् वा कवेः, सामाजिकस्य तु ।**
**मातृस्तन्यं यथा काव्यं हन्त सर्वार्थ—साधनम् ॥१७॥**

मातु स्तन्य हि गुणावगुणौ न पश्यति, परिपोषयतितमा च स्तनन्धयान् स्वरसप्रवृत्त वात्सल्येन। काव्यमपि तथैव रसिकत्वमात्रं पश्यति, न वर्णभेदान् न वा वर्गभेदान् परिस्रवति च पुरुषार्थपीयूषासार निरर्गलधारम्। यदुच्यते "वत्सविवृद्धिनिमित्त क्षीरस्य यथा प्रवृत्तिरज्ञस्ये"-तीश्वरेण, "कुपुत्रो जायेत क्वचिदपि कुमाता न भवती"-ति चेश्वरावतारेण भगवता शङ्करेण। अत एव चोच्यते कालिदासेनापि महाकविना "यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद् वच" इति। शिल्पेषु कलैव हि भगवती पार्वती। तथा च स्मृतिः "कलाकाष्ठादिरूपेण परिणामप्रदायिनी, विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते" इति। कलापि सर्वतोभावेन पुण्यवृत्तिरेव। काव्यमपि कलैव अत एव च मातृस्तन्योपम तत् ॥ तदित्थ निरूपित काव्यप्रयोजन कविसहृदयोभयगतत्वेन ॥ १७ ॥

## Purpose of poetry for the Reader

17. For the poet poetry may or may not have any return but for the Reader, we are happy to proclaim that it ( poetry ) stands like the milk of mother and yields every thing he wants.

I Sāmājika a particular reader whose heart is filled with the chequered experiences of the world.

II Every thing Austerity, Wealth, Passon and eternal salvation i. e. all the four goals of life. Mammata's word 'Artha' is taken by Jayaratha in this wide sense in his Vimarśinī on Alamkārasarvasvam [ Page-3 My ed ]

काव्यस्य लक्षण प्रयोजन चोक्त्वा तस्यात्मानम् उपपादयितुमितिहा-समुखेन भूमिकामाबध्नन्तो ब्रूमहे—

**काव्यं तद्दर्शनं चेति द्वितयं हि परम्परा ।**
**साहित्यशब्दाद् गृह्णाति संस्कृते काव्यदर्शने ॥१८॥**

"कृत्तद्धितसमासाना सम्बन्धाभिधायित्व भावप्रत्ययेने"-ति नियमात् सहितयो· शब्दार्थयो सहिताना वा शब्दार्थतद्गतविशेषाणा सम्बन्धः साहित्यम् । सम्बन्धश्चासौ त्रिषु[1] स्कन्धेषु प्रत्येक चतुर्विधत्वेन दिवाकर इव द्वादशात्मा । तत्र **प्रथमः** स्कन्धो वक्तृधर्मरूप. । तत्र वृत्तिर्विवक्षा तात्पर्य प्रविभागश्चेति चत्वारः सम्बन्धा. । तत्र वृत्तिर्नामास्मात् पदादयमर्थो बोद्धव्य इति वक्तृबुद्धिमात्रसमवेतो जरन्मीमासकैरभिधा-लक्षणागौणीपदव्यपदेश्यः, ध्वनिवादिभि. अभिधालक्षणाव्यञ्जनाशब्द-व्यवहार्यो, मुकुलभट्टादिभिर्वैयाकरणैश्च मुख्यामुख्याभिधामात्रव्यवहार्यो वा पदज्ञानपदार्थज्ञानद्वयानुयोगिक सम्बन्ध. । विवक्षा समसक्षिप्तविस्तृतैः सकाकुभि· शब्दैरर्थस्य वक्तुमभिलाष. । यत्परः शब्द· स शब्दार्थः, तदेव च तात्पर्यम् अभिधेय-प्रत्याय्य-ध्वनिनामभि· प्राचाम् अभिधेय-प्रत्याय्यमात्रात्मतया चास्माकमभिमतम् त्रिविध द्विविध वा । प्रविभागश्च "एतावतोर्थसार्थस्यैतावान् शब्दसमूहः प्रत्यायक" इति विश्लेषबुद्धिः । त इमे प्रथमस्कन्धगताश्चत्वारः सम्बन्धा· । **द्वितीयश्च** स्कन्ध उक्तिरूप. । तत्र व्यपेक्षा, सामर्थ्यम्, अन्वय एकार्थीभावश्चेति चत्वार· सम्बन्धा. । तेषु व्यपेक्षा नामाकाङ्क्षा पदार्थाना क्रियाकारकरूपाणाम् । सामर्थ्यं

## D. Old concepts

### Meaning of the word SĀHITYA

18. Traditioa in samskrta–poetics has termed poetry and poctics both as SĀHITYA

---

१. भावप्रकाशनस्य ६ १५४-५५ पृ० १४५ त. । अत्र १४०–१४१ वृत्ती

नाम योग्यता, येन नानीयेत विघ्न आकाङ्क्षाप्रशमे पदार्थानाम् । अन्वयो नाम साकाङ्क्षाणा पदार्थानामन्योन्य ग्रन्थिबन्धः । एकार्थीभावश्चान्वयाव्यवहितोत्तरीयो वाक्य-वाक्यार्थानामखण्ड आकार. । एते चोक्तिगताश्चत्वार. सम्बन्धाः । **तृतीयश्च** स्कन्धोऽलङ्काररूप । तत्र च दोषहानम्, गुणादानम्, उपमादिपरिग्रहो रसावियोगश्चेति चत्वारः सम्बन्धा. । तत्र दोषाभाव., गुणाः, उपमादयः शृङ्गारादयश्चालकारैकविग्रहा इति पश्चाद् वितत्य निरूपयिष्यते । 'प्रथमेऽष्टावेव साहित्यम्, परे च चत्वारस्तत्परिष्कार' इति साहित्यमीमासाकार. । 'सर्व एवैते साहित्यमि'-ति भोजशारदातनयौ,[१] 'वाच्यस्य वाच्यान्तरेण वाचकस्य च वाचकान्तरेणान्यूनानतिरिक्ततामय. परस्परस्पर्धितारूप समभाव एव साहित्यमि'-ति च कुन्तकः । 'परस्परस्पर्धिना वाच्यवाचकानामनुपदोक्तसर्वविधसम्बन्धानुयोगित्वमेव साहित्यमि'-ति तु मादृशाः । यथा चैतत् तत् प्रत्यपदीपदामत्रैव १४०-१४१ कारिकाविवृतौ सप्रमाणं कणेहत्येति तत् तत एवावधेयम् ।

तच्चेद साहित्यमष्टसम्बन्धात्मक सत् सर्वविधवाङ्मयमधिकरोति, द्वादशसम्बन्धात्मक च सत् काव्यमात्रमिति विवेकः । एव स्थिते काव्यशास्त्राय साहित्यपदप्रयोगो विषयविषयिभावाश्रितो भाक्त. । येयमिदग्राहिका परम्परा सापि न प्राचीना, प्राचीनाया तस्या गुणोपमादिशृङ्गारादिनिरूपकेभ्यो ग्रन्थेभ्योऽलङ्कारशब्दस्यैव प्रयुक्तत्वात् । यथा चेद तत् "काव्यालङ्कार"-पदमाहत्य परिणतबन्धेभ्यो भामह-वामनकुन्तक-रुद्रट-प्रथमवाग्भट-पण्डितराजजगन्नाथ-ग्रन्थेभ्य स्फुटम् । तत एव चाद्रियामहे वयमपि काव्यालङ्कारशब्दमेव कारिकायामस्याम् । यश्चायम् आदर्शालोक-प्रकाशानुशासन-शब्दाना काव्यपदानन्तरीयः प्रयोगो दण्डयानन्दवर्धन-मम्मट-द्वितीयवाग्भट-हेमचन्द्राणा तत्रालङ्कार-

---

१ शृङ्गारप्रकाशे सप्तमप्रकाशावतरणिकायाम्, भावप्रकाशने च षष्ठेऽधिकारे १५४ पृष्ठत ।

पदस्योपमादिविच्छित्तिमात्रपरत्वेन रूढिर्विचिकित्सामूलम् । सा चास्माभिः सप्रज्ञानमवहेलिता तथ्यमात्रमनुसरद्भिः पौरुषेये वाङ्मये । यश्चान्यो मीमासा-दर्पण-सार-सुधासिन्धु-प्रभृत्युत्तर' साहित्यपूर्वश्च मङ्खुक-विश्व-नाथ-सर्वेश्वराच्युतरायप्रभृतीना स्वस्वग्रन्थरत्न-व्यपदेशस्तत्र साहित्यपद काव्यैकपरम् । नास्ति च साहित्यपदं वाङ्मयमात्रपरतया केनापि प्रयुयुक्षितम्, ऋते साहित्यमीमासाकारम् । यश्चासौ "साहित्यपाथोनिधिमन्थनोत्थ कर्णामृत रक्षत हे कवीन्द्रा" इति विह्लणप्रयोगस्तत्र विश्वनाथ-सर्वेश्वराच्युतराय-वदेव दृश्य-श्रव्योभयविध-काव्यैकपरत्वमेवेति प्रत्येतव्यम् । अत एव च श्रव्य-काव्यमात्र-विचार-सीमिताना मम्मट-प्रभृतीना काव्यप्रकाशादिषु काव्यशब्द एव समादरपदम् । ननु काव्यशास्त्रालङ्कारशास्त्रप्रभृतिशब्दव्यपदेश्याय काव्यदर्शनाय साहित्यशब्द-प्रयोग. क्व दृष्ट इति चेत् "श्रुत्वाभिनवगुप्ताख्यात् साहित्य बोधसागरादि"-ति बृहत्कथामञ्जर्युपसहारे ब्रुवाणः क्षेमेन्द्रोऽत्र पर्यनुयोज्य. । एतत् सर्वमपि वितत्य प्रत्यपीपदामात्मनः साहित्यतत्त्वविमर्शनामनि सन्दर्भेऽपीति कृतमतिविस्तरेण ॥ १८ ॥

I. Poetry Prose, Poem and drama.

II. Sāhitya : the twelve relations among the semantic meanings af poetry. All are variously classified by Bhoja, Sāhityamīmāṃsā and Śāradātanaya See Kārikā 140–41 and the gloss thereon [ K 18 ]

कतिप्रस्थानं काव्यदर्शनमित्याकाङ्क्षायां प्रसिद्धिः स्वमतं च—

रसोऽलङ्कार-रीती च ध्वनिर्वक्रोक्तिरेव च ।
औचित्यं चेति काव्यस्य प्रस्थानानि क्रमेण षट् ॥१९॥

तेषामेषां रसो रीतिरौचित्यं च ध्वनेस्तनौ ।
समाधिषत, वक्रोक्तिश्चालङ्कारे व्यलीयत ॥२०॥

अलङ्कारो ध्वनिश्चेति द्वयं तत् काव्यवर्त्मनि ।
नारायणो नरश्चेति द्वयं यद्वदवस्थितम् ॥२१॥

यद्वाऽलङ्काररीती च ध्वनिर्वक्रोक्तिरेव च ।
एकस्य पयसो धारास्तैस्तैः शब्दै-रुदाहृताः ॥२२॥

रसस्त्वेषां फलं तच्च सामाजिकचिति स्थितम् ।
एतद्विघ्नापहारो यस्तस्यौचित्यमिति श्रुतिः ॥२३॥

अस्मन्मते त्वलङ्कारः काव्यस्याङ्गस्य वीक्षणे ।
ध्वनिं सोमं यथा वह्निः कवलीकृत्य राजते ॥२४॥

काव्यस्याङ्गपरीक्षायामलङ्कारो हि नस्ततः ।
दिवौकसामरण्यान्यां मधुमासो यथा गुरुः ॥२५॥

Classification of Poetic data by others :

19. To the old rhetoricians ( and to their modern followers ) belong the following six schools : Rasa, Alamkāra, Rīti, Dhvani, Vakrokti and Aucitya ( see P 45.)

20. Out of these Rasa, Rīti and Aucitya are assumed as merged in Dhvani and the Vakroti in Alaṁkāra.

21. Thus Alamkāra and Dhvani are the only two characteristics which remain in (old) poetics just like Nārāyana = God and Nara = Man (in the world creation as the vedic mythology runs).

New analysis of the old term ,

22. Reality is this that each of Alamkāra, Rīti, Dhvani and Vakrokti are the showers of one and the same milk which (the different showers) are being named by this or that word.

23 Rasa is an out-come of them. It (rasa) dwells into the spirit of a cultured reader or enjoyer of poetry. And the remaining Aucitya is but a prevention of its (rasa's) obstacles

**My own Opinion** ·

24. So far as the figurative analysis of poetry is concerned in my opinion the Alamkāra does swallow the dhvani as the Fire swallows the Soma and stands in its full brightness.

25. [ Consequently ] In the analysis of form of poetry, only Alamkāra of my concept is proved as valuable as the spring-season in the garden of Gods

भरतादिप्रस्थानभूमित्वात् तत्तच्छास्त्राणि तत्तत्प्रस्थानानि। पारम्परी तु द्वयोरेव "अलङ्कारस्य ध्वनेश्चे"ति तावेव द्वौ सम्प्रदायौ, शेषास्तु प्रस्थानपदमात्रवाच्याः। ततश्च साम्प्रदायिके प्रस्थाने द्वे एव, शेषाणि तु प्रस्थानमात्राणि प्रस्थापकाचार्यग्रन्थमात्रसीमितानि। या चाधुनिकाना "साहित्ये षट् सम्प्रदाया" इति भाषा तत्र तन्त्र प्रस्थानसम्प्रदाय-व्यतिरेकानभिज्ञानम्।

क्रमेणेति कालक्रमेणेति भाव·।

रीते प्रस्थानत्वमत्र प्रसिद्धिमात्राश्रितम्, तत्प्रवर्त्तकस्याचार्यस्य सौन्दर्य एव सरम्भात्। ततश्च वामनप्रस्थान सौन्दर्यप्रस्थान-नाम्ना व्यपदिशामः, न तु रीतिप्रस्थाननाम्ना, गुणप्रस्थान-नाम्ना वा। "काव्य ग्राह्यमलङ्कारात्" इति, "सौन्दर्यमलङ्कार" इति च सूत्रयित्वा काव्य-स्यात्मत्वापरपर्याये ग्राह्यत्वे सौन्दर्यमूलकत्वमुपस्थाप्य सौन्दर्यरूपकाव्य-शोभाजनकत्वविशिष्टधर्माभिन्न-गुण-शालिन्या· कविस्वभावसतत्त्वाया रीते। "रीतिरात्मा काव्यस्ये"-ति आत्मत्व ब्रुवाणस्य वामनस्य साध्यरूपे सौन्दर्य एवात्मत्वपर्यवसिति न तु साधनभूताया रीतौ गुणेषु वा तद्गतेषु। एव च "रीतिरात्मा काव्यस्ये"-ति सूत्रयतोऽपि वामनस्यापि तत्रैव तात्पर्यं यत्र रसवादिना भरतप्रभृतीनाम्। ततश्चैवमत्रोपस्कुर्महे—

'सौन्दर्यमेव काव्यात्मे'—त्येतद् वामनदर्शनम्।
साधनस्यात्मभावे यत् साध्यस्यासौ स्वत स्थित· ॥१०॥ इति ॥

इद चात्र समाहितेन चेतसा निध्येय यद् येयमलङ्कारस्यात्मभावेन प्रख्यापना सापि निर्मूलैव। न ह्येव पश्यामः "रस [1]काव्यार्थ" इतिवत्, "रीतिरात्मा काव्यस्य" इतिवत्, 'काव्यस्यात्मा ध्वनिरि'-तिवत्, "वक्रोक्तिः काव्यजीवितमि"-तिवत्, "औचित्य रससिद्धस्य स्थिर काव्यस्य जीवितमि"-तिवद् वा कस्यापि सुमेधसो वाक्यम् "अलङ्कार

---

१. भरतनाट्यशास्त्रीयस्य ७-अध्याये।

काव्यात्मा" इति। यच्चेद "काव्यालङ्कार" इति ग्रन्थनामकरणं तदप्यक्षममलङ्काराणा काव्यात्मत्वप्रसाधने, अलङ्कारप्रस्थानानुध्यायिनामलङ्कारशब्दस्योपमादिमात्रपरत्वात्, काव्यालङ्कारपदव्यपदिश्यमानाना च ग्रन्थानामलङ्कारपदेन गुणादीनामपि ग्रहणस्य दर्शनात्। ततश्च निकृत्तमूलमेतद् यदुपमादोना काव्यात्मत्व-प्रस्थानमिति। अय चात्र सग्रहः—

उपमादावलङ्कारे काव्यात्मत्वस्य दर्शनम्।
मूलहीन प्रमाणस्याभावादाकाश-पुष्पवत् ॥ ११ ॥
काव्यालङ्कार - सज्ञाया - मलङ्कार - पदान्वय ।
सर्व एव हि काव्यस्य धर्मो नो कश्चिदेकल· ॥ १२ ॥
सालङ्कारस्य काव्यत्व पश्यतः कुन्तकस्य च।
वक्रोक्तिरपि काव्यस्य सर्वान् धर्मान् वगाहते ॥ १३ ॥
काव्यालङ्कारसज्ञाभि वक्रोक्त्या वापि गाहताम्।
काव्यात्मत्वमलङ्कारो न तु तद्भिन्नवर्त्मना ॥ १४ ॥
तथा सति भवेन्न्यूना प्रस्थानगणना विदाम्।
पञ्चत्व सावगाहेत हन्त हन्त विगर्हितम् ॥ १५ ॥

इति ॥

प्रस्थानेषु चैतेषु—

१. रसो नाम काव्याभिनयान्यतरोपस्थापितानामपहृतविशेषाणामत[1] एव चापहृतविशेषस्य सामाजिकस्य चित्तवृत्तितामश्नुवता विभावादीनां सामाजिकगतेनैवापहृतविशेषेणैव स्थायिना भावेन सयोगादभिव्यज्यमाना शृङ्गारादिशबलिता चित् चित्प्रकाशगोचरीकृतो वा तादृश स्थायी ॥

---

१. अपहृतविशेषत्व नाम साधारण्यं काव्यनिष्ठेन भावकत्वाख्येन व्यापारेण भावकधर्मेण वा भावकत्वेन निष्पाद्यमानम् असाधारण्यनिरासरूपोभयाभावस्वरूपम्।

२. अलङ्कारश्च रसादिव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयित्वसम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदको धर्मविशेषः प्राचामभिमत ॥

३. रीतिश्च कविगता काव्यनिर्माणप्रवृत्तिः, गत्यर्थकाद् रीङ्धातोः क्तिना[2] निष्पन्नत्वात् । सौन्दर्यं च रीत्येकसाध्या काव्यशोभा ॥

४ ध्वनिश्च वाच्यलक्ष्योभयविधार्थचमत्कारापेक्षयाधिकचमत्कारकारी प्रतीयमानोऽर्थ. ॥

५ वक्रोक्तिश्च वैदग्ध्यभङ्गीभणिति वर्ण-प्रकृति-प्रत्यय-वाक्य-प्रकरण-प्रबन्ध-गतत्वेन षड्विधा ॥

६ औचित्य च सदृशत्वम् अनुरूपत्वापरपर्यायम ॥ १९ ॥

---

१ अनुप्रासादियुक्तशब्दार्थज्ञानाच्चमत्कारोदये तादृशज्ञाननिष्ठा या चमत्कृतिजनकता तदवच्छेदक-ता विषयितासम्बन्धेन तादृशज्ञाने विद्यमानयो शब्दार्थयो, तदवच्छेदकत्व च शब्दार्थनिष्ठेषु अनुप्रासादिषु । ततो लक्षण-समन्वयः । व्यङ्ग्यत्वमलङ्कारत्व चाविप्रतिषिद्धमिति व्यङ्ग्यभिन्नत्व पण्डित-राजादिमते निरर्थकम् । अस्मन्मते पुन. शब्दस्याकाव्यत्वात् शब्दार्थान्यतरनिष्ठत्व विहायार्थमात्रनिष्ठत्वमादेयम् । एतच्च सर्वमलङ्कारपदस्योपमादिपरत्वमादाय । अस्मदभिमत-वक्ष्यमाणालभावरूपालङ्कारपरत्वे तु भिन्नैव कथा । सापि यथा-स्थानमनुपदमेवोपस्थापयिष्यते ।

२ उक्त हि भोजदेवेन सरस्वतीकण्ठाभरणे—

वैदर्भादिकृत पन्था. काव्ये मार्ग इति स्मृत ।
रीङ्गताविति धातो सा व्युत्पत्त्या रीतिरुच्यते ॥

—इति [ २ २७ कारिकया ]

दण्डिप्रयुक्तमेव मार्गशब्दमादाय कुन्तकोऽपि "कविप्रस्थानहेतव" इति कविगता काव्यप्रवृत्तिमेव रीतित्वेनागूरयति ।

षण्णामपि प्रस्थानानामन्तर्भावोऽन्योन्यस्मिन् यथा तद् ब्रूम. तेषामिति। तत्र रसो नाम स्थायिविशिष्टचिद्व्यक्ति आनन्दसप्लवो वा तदुदितः। स च न शब्दवाच्यः, रसादिशब्दाना शृङ्गारादिशब्दाना प्रयोगेऽपि तादृशस्यानन्दसप्लवस्यानुत्थानात्, ऋतेऽपि च रसादिशृङ्गारादिशब्दप्रयोगे सत्या विभावादिसामग्र्यामानन्दसप्लवस्यास्य समुत्थानात्। एव च व्यञ्जनैकविषयो रसो ध्वनिरूप, ध्वनेरपि प्रधानव्यज्यमानार्थस्वरूपत्वात्। अत एवानन्दवर्धन. "प्रतीयमान पुनरन्यदेव वाच्यात्' इति 'स ह्यर्थो वाच्यसामर्थ्याक्षिप्त वस्तुमात्रमलङ्कार-रसादयश्चे-त्यनेक-प्रभेद-प्रभिन्न ' इति च [ ध्वन्यालोकस्य १।४ वृत्तौ ] । अत्र लोचनमातन्वानोऽभिनवगुप्त –'प्रतीयमानस्य तावद् द्वौ भेदौ लौकिकः काव्यव्यापारैकगोचरश्चेति। लौकिको य स्वशब्दवाच्यता कदाचिदधिशेते, स च विधिनिषेधादिरूप. उपमादिरूपश्चेति द्विविध। तत्र प्रथमो वस्तुध्वनिनामधेयः, परश्च ब्राह्मणश्रमणन्यायेनालङ्कारध्वनिव्यपदेश्य.। यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतित', किन्तु शब्दसमर्प्यमाण-हृदयसवादसुन्दर-विभावानुभावसमुचित-प्राग्विनिविष्ट- रत्यादिवासनानुराग-सुकुमार-स्वसविदानन्द-चर्वणा-व्यापार-रसनीय-रूपो रस, स काव्यव्यापारैकगोचरो रसध्वनिरिति, स च ध्वनिरेवेति। एवमेव मम्मटोऽपि काव्यप्रकाशस्य पञ्चमोल्लासारम्भे-"सकलनेन पुनरस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्। तथाहि किञ्चिद् वाच्यता सहते, किञ्चित्त्वन्यथा। तत्र वाच्यतासहमविचित्र विचित्र च। अविचित्र वस्तुमात्रम्, विचित्र त्वलङ्काररूपम्, ब्राह्मणश्रमणन्यायेन। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्य'। स हि रसादि-शब्देन शृङ्गारादिशब्देन वाभिधीयेत, न चाभिधीयते, तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्ते, तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्च। इति अन्वयव्यतिरेकाभ्या विभावाद्यभिधानद्वारेणैव प्रतीयते इति निश्चीयते तेनासौ व्यङ्ग्य एव, मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः" इति।

"तमर्थमवलम्बन्ते येऽङ्गिन ते गुणा. स्मृताः।

अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवदि'-ति ध्वन्यालोकदृशा।

ये रसस्याङ्गिनो धर्मा शौर्यादय इवात्मनः।

उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणा॥ इति च मम्मटदिशा गुणाना रसधर्मत्वाद् रसन्यायेन व्यङ्ग्यमात्रत्वम्, धर्मिणो व्यङ्ग्यत्वे धर्मस्यान्यथात्वासम्भवात्। ते च गुणास्त्रय एव माधुर्यम्, ओजः, प्रसादश्चेति। ये च शब्दगत-दशगुणीमध्यपातिता बन्धगुणतया च ख्यापिता माधुर्यौजःप्रसादाख्यास्त्रयो वामनाचार्यगुणास्तेऽपि ध्वनिभक्तैर्बन्धादाच्छिद्य रसगर्भं प्रवेशिताः। यथा चैतत् तत्—

असमासा समासेन मध्यमेन च भूषिता।
तथा दीर्घसमासेति त्रिधा सघटनोदिता॥
गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा रसानि।-ति

तस्यैव परमाचार्यस्य भगवत आनन्दवर्धनकवेः कारिकाभ्यां स्पष्टम्। एव च स्थितमेतद् यद् गुणा अपि ध्वनिधर्माः।

"औचित्य" च यथा ध्वनिधर्मस्तद् औचित्यप्रस्थानप्रवर्तकेन क्षेमेन्द्रेणैव प्रोक्तम्, "औचित्य रससिद्धस्य स्थिर काव्यस्य जीवितमि"-ति। अनुपदमेव वक्ष्यामो "रसविघ्नापहारो यस्तस्यौचित्यमिति श्रुति"रिति। उच्यते चानन्दवर्धनेन

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा॥ इति

ततश्च रसस्य ध्वनित्वाद् ध्वनिधर्मत्वमेवौचित्यस्यापि।

ननु औचित्य हि विभावादिधर्मः, ते च वाच्याः, ततः कथं नामौचित्यस्यापि न वाच्यत्वमिति चेत् सत्यम्, अस्त्वेतस्य वाच्यत्वमपि, किन्तु नातिरिच्येतेद दोषाभावादिति भक्षितेऽपि लशुने न शान्तो वायुः।

उपपादित एव रसरीत्यौचित्याना ध्वनावन्तःपातः।

वक्रोक्तेरलङ्कारत्व वक्रोक्तिकृतैव कण्ठरवेणैव जोघुष्यते । तथाहि–

अलङ्कृतिरलकार्यमपोद्धृत्य विवेच्यते ।
तदुपायतया तत्त्व सालङ्कारस्य काव्यता ॥
शब्दार्थौ सहितौ वक्र-कवि-व्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्य तद्विदाह्लादकारिणि ॥
उभावेतावलकार्यौ तयो पुनरलङ्कृति ।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते ॥[1] इति ॥

वयमत्रैव विमृशाम —

ध्वन्यालोके ध्वनित्वेन ध्वनिकारस्य यन्मतम् ।
सर्व तत् कुन्तकाचार्यैर् वक्रोक्त्या सजिघृक्ष्यते ॥ १६ ॥
ध्वनिना सुरसास्येन[2] विपुलाभोग-शालिना ।
निगीर्णं निखिल त्यक्त्वाऽलङ्कार-पवनात्मजम्[2] ॥ १७ ॥

एव वक्रोक्तेरपि ध्वनावेवान्त पात इति स्थितम् । तस्या अलङ्कारेऽन्तः-पातस्योक्तिस्तु प्राचामनुरोधमाश्रित्य ॥ २० ॥

अलङ्कार इति । अलङ्कारपदमत्रोपमाद्यखिलविशेषोपलक्षणम् । तत्र अलङ्कारो नारायणस्थानीय', ध्वनिश्च नरस्थानीयः । नारायण एव हि नर इति नरस्य नारायणाभिन्नत्वमिव ध्वनेरप्यलङ्काराभिन्नत्वं सूचितम् । सूचित चानेनौपम्योपन्यासेन महत्त्वमप्यलङ्कारध्वन्योः ॥ २१ ॥

यद्वेति । प्राचा किलालङ्कारिकाणा यदेव तत्त्वजातमलङ्काराख्यया प्रतिपिपादयिषितम्, तदेव रीतिसज्ञया, तदेव ध्वनिसज्ञया, तदेव च वक्रोक्तिसज्ञया । एतच्चतुष्टयप्रतिपादकाना ग्रन्थाना मध्ये सर्वेषामेव

---

१. वक्रोक्तिजीवितकारिका. १।६,७,१० ।

२ सुरसाख्यान बाल्मीकीये रामायणे सुन्दरकाण्डस्य प्रथमसर्गमध्ये प्रसिद्धम् । उपमयानया ध्वने फल्गुत्व वृथारम्भत्व च सूचितम् ।

विषयाणा गुणप्रधानभावेन सगृहीतत्वात् । यथा चैतत् तत् तेषा तेभ्य-स्तेभ्यो ग्रन्थेभ्य एवावगन्तव्यम् अवधानेन । ततश्च सस्कृतकाव्यशास्त्रे महासज्ञाः खल्वेता यद् अलङ्कार., रीति., ध्वनि॰, वक्रोक्तिश्चेति । एकैव सुरभि:, एकमेव तस्या ऊध , एकमेव च पयः । अनेकत्व तत्र स्तनेष्वेव, धारासु च तद्गतासु । एव च यथा धारास्तनभेदेन सुरभेः पयो न भिद्यते तथैव तत्तदाचार्यशेमुषीणा भिन्नत्वेऽपि, भिन्नत्वेऽपि च प्रतिपादयित्रीणा महासज्ञानाम् एकैव भगवती कविता, एकमेव च तस्याश्चमत्कारनिदानम् । अयमत्र विशेषो यद् ध्वनिसज्ञा प्रौढिमात्रेणैव प्रवर्त्तिता, अन्याश्च सज्ञा तास्तान् गुणानुपलक्ष्य । नहि कुत्रापि कोषादिषु काव्यस्य, प्रतीयमानस्य वार्थस्य कृते ध्वनिसज्ञा लभामहे सस्कृतवाङ्मये ॥ २२ ॥

रस इति । उपपादित हि रसस्य ध्वनित्वम् । इदानी विकल्पमुप-स्थापयाम॰ । तथा च रसस्य ध्वनित्वमपि न क्षमम् । तस्य सामाजिका-त्मनि विद्यमानत्वात्, ध्वनेश्च काव्यधर्मत्वात् । ननु चमत्कारप्राधान्य-शालिप्रतीयमानार्थत्व ध्वनित्वम्, ततश्च ध्वनेरपि न काव्यधर्मत्वम्, प्रतीयमानत्वेन अर्थान्तरस्यापि सामाजिकबुद्धिमात्रनिष्ठत्वात् इति चेत्, ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या, ध्वनतीति व्युत्पत्त्या वा काव्यस्य वाच्यार्थ-स्यापि च ध्वनित्वस्याभिनवगुप्तादिभिरूरीकृतत्वात् सूपपादमस्य काव्य-धर्मत्वमपि । यदि च सामाजिकधर्मत्वमेव ध्वनिसज्ञकस्य प्रतीयमान-स्यार्थस्य स्वीचिकीर्षित तर्हि प्रसन्ना एव वयम्, प्रतिपक्षेणापि काव्यस्य ज्ञानात्मकत्वमेवेत्येतस्य स्वपक्षस्य समर्थनात् ।

यच्चेदमौचित्य तदपि रसविघ्नापहाररूपमेवेति दोषाभावत्वमस्य, अहरहः सन्ध्योपासनस्येव । न हि सन्ध्या कस्मैचिद् गुणाय कल्पते, अनुपास्यमाना तु प्रत्यवायायेति प्रत्यवायरूपदोषाभावरूपत्वमेव तस्याः । एवमेव सर्वाङ्गशालित्व नाम न गुण , अपितु काणखञ्जकुणित्वादिदोषा-भाव एव । ततश्चानौचित्यापहार एवात्रौचित्यम् । तच्चाभ्यर्हिततम-

मेव रसायेति न तस्य गुणत्वेन गणना। न हि पुत्र. पितरौ प्रणमतीति गुणवत्त्व तस्य, कुपुत्राभावरूपदोषत्वपरिहार एवासौ यत् पित्रोरभिवादनम्। ततश्च रस औचित्य च नार्हत: प्रस्थानपदवाच्यता काव्यदर्शने, रसस्याकाव्य-[ सामाजिक ]-निष्ठत्वात्, औचित्यस्य च दोषाभावस्वरूपत्वात् ॥ २३ ॥

अस्मन्मत इति। काव्यस्य हि द्वौ पक्षौ प्रमेयपक्ष., प्रमातृपक्षश्चेति। प्रपञ्चयिष्यते चैतद् विस्तरेणाग्रे। तत्र काव्यस्य यद् अङ्ग शरीर तत् प्रमेयम्। प्रमाता पुन. सामाजिकचैतन्यम्। तत्र प्रमेयमात्रस्य वीक्षणे परीक्षणे क्रियमाणे ध्वन्यतेऽस्मिन्निति लोचनाभिमतया व्युत्पत्त्या ध्वनिरपि काव्यालङ्कारकोटिमेव प्रविष्ट। तत्र दृष्टान्त. सोमोऽग्निश्च। सोमो ह्यन्नम्, अग्निश्चान्नाद। यथैतत् तन्नाप्रत्यक्ष वेदविदाम्। अन्नादो ह्यन्नमत्त्वा स्वस्वरूपमात्रेण प्रकाशते, अतिशयोक्तिन्यायेन। एवमेवालङ्कारोऽपि ध्वनि कवलीकृत्य काव्यशरीरगते चमत्कारसाम्राज्य ऐकाधिपत्यमाच्छिनत्ति। एव च यथा विश्वस्यास्याग्नीषोमात्मकत्व प्रतीतचरम् तथैव काव्यविश्वस्यापि ध्वनिरूपालङ्कारात्मत्व सुशकप्रतीतिकम्॥२४॥

काव्यस्याङ्गेति। अङ्ग काय· नः अस्माक न तु प्राचाम्। ततः उक्तचरेण हेतुना प्रमेयमात्रपरीक्षाया केवल. अलङ्कार एवैक काव्यधर्मतयाऽवशिष्यते, दिवौकसामरण्यान्या नन्दनाख्ये देवोद्याने मधुमास इव। यथा हि स्वतः सुभगमपि देवोपवन मधुमासमासाद्य सुषमातिभूमिमासादयते तथैव काव्यमपि अस्मदभिमतमलङ्कारमवाप्य। यथा च देवोद्यानाय नित्यस्थितिक-मधुमासातिरिक्तस्य नास्त्येवापेक्षा प्रसाधकस्य तथैव प्रकृतेऽपि अलङ्कारातिरिक्तस्य काव्यायेति सादृश्यसम्पत्त्याऽनयाऽऽगूरितम् ॥ २५ ॥

अयमत्र सिद्धान्तसग्रह —

औचित्यं च रस चापि त्यक्त्वा चत्वारि केवलम्।
प्रस्थानानि, भजन्त्येतान्यपि कृत्स्नान्यभिन्नताम् ॥ १८ ॥

एतेषु सम्प्रदायत्व द्वयोरेव समञ्जसम् ।
अलङ्कारो ध्वनिश्चेति सज्ञयोर्ग्रन्थसन्तते ॥ १९ ॥
प्रमेयमात्रनिष्ठत्वादनयोरपि केवल. ।
अलङ्कारो हि काव्यस्य धर्मता याति मन्मते ॥ २० ॥ इति ॥

A Six Schools in poetics.

| | | |
|---|---|---|
| i | Rasa | Mood, emotion or Sentiment, |
| ii | Alaṃkāra | Figures of speech, |
| iii | Rīti | Style or Diction, |
| iv | Dhvani | Suggestion, |
| v | Vakrokti | Expression excelling the common one[1] & |
| vi | Aucitya | Decorum or propriety |

B I In K 19 the classification represents the poetics proposed in 900th A D and afterwards Before it every characteristic of poetry was termed as Alaṃkāra. And this concept was surviving upto the 1700th AD. i e. upto Jagannātha but only in the subconscious mind.

II In Dhvani-school 'Rasa' is one of the three major kinds of Dhvani

III. To Ānandavardhana and his devotees Rīti does not have any independent significance apart from Guṇa. In their own term the guṇas are assumed as the qualities of Rasa too It is also accepted that these Rasa-guṇas are the guiding factor's of the guṇas of sounds and meanings Here one should be conscious of the fact that Ānandv does not discard

1. Dr. S. K De P 185 H. S P 1960 Ed

the existence of gunas in sound and sense, while propagating and advocating for the Rasa-gunas

IV. The merger of Rīti and gunas means—they are no more soul of poetry as it has been transferred to the Dhvani

V According to Ānandav Aucitya is the foremost quality without which rasa cannot exist This way Aucitya stands as the feeding quality of Rasa-dhvani

VI Reality is this that Vāmana's school should be named after 'Saundarya' and not after Rīti even if Vāmana is heard speaking as 'Rītirātmā Kāvyasya' or 'Rīti is the soul of Poetry' To Vāmana Rīti is but a means of 'saundarya' and logically no means can ever reach the height of the soul And the soul is all the time main or chief

VII In the Mahābhārata Arjuna is the incarnation of Nara whereas Nārāyaṇa presents himself in the shape of Śrikrsṇa, the charioteer and loser brotherinlaw of the former Of course man is the gainer brotherinlaw of God in Vedic philosophy In the Purāṇas Nārāyaṇa God is venerated only after he is a friend of Nara man. 'Nārāyanam nara-sakham śaranam prapadye'–[ The first verse of almost all the Purāṇas ] [ K. 19 ]

I If the milk is same no currents could be felt different in taste, though they may become different in shapes, in breadth, in thickness and in length This way all the rhetoricians have realized all the qualities of poetry and each of them is true to his findings, emphasized under different heads Alaṃkāra, Guṇa, etc. Every

rhetorician undertakes to define and illustrate all these elements, but chooses only one term for all and imphasizes on its preponderance.

II. Here lies one thing notable : Upto Mammata none has declared Alaṁkāra as the soul of poetry and yet this Alaṁkāra-school is running and coming down from centuries to centuries Irony is this that while using 'Alaṁkāra' term for Alaṁkāra-school what is meant is Upamā, Rūpaka and other figures of speech when the reality is different If one regards Vakrokti as Alaṁkāra Kuntaka is the first rhetorician who originates this Alaṁkāra-school, and consequently Vakrokti and Alaṁkāra merge into each other Now the number of the schools comes down from six to five One may remember Kuntaka's proclaimation—'Sālaṁkārasya Kāvyatā'='Poetry is no more poetry without Alaṁkāra'

Meanwhile on the lines set by me ( in note–VI on page-46 ) one would say Vāmana is the first rhetorician who declared Alaṁkāra as the soul of poetry, as he accepts his 'Saundarya' as Alaṁkāra 'Saundaryam alaṁkārah' but he too will not be able to proclaim the upamā, rūpaka, etc., as the soul of poetry for the 'Saundarya' is totally different from these figures of speech, whereas the Alaṁkāra-school is limited upto these figures only Even them one is unable to protect the number of schools from its decrease

III According to Alaṁkāra-sarvasvam gloss by Mankha on the 'Alaṁkārasūtra' of Ruyyaka or Rucaka right

from Bhāmah ( whom they regard as the first rhetorician after Bharat ) to Rudrata ( 900th A D ), the auther of Kāvyālaṃkāra in 16 chapters, all the sorts of suggested meanings were included into different Alaṃkāras just as Paryāyoktam, Aprastutapraśaṃsā and others Accepting the denoted meaning ( Lakṣya Artha ) Vāmana too has admitted the Vakrokti as Alaṃkāra and thus, as Mankha says he included the dhvani also into the alaṃkāra though partly. As the guna and upamā etc are identical in the view of Udbhata and others, Alaṃkāra is the only quality which reaches to the prominence This way, though speaking of alaṃkāra all these rhetoricians pay their attention to all the other elements also related to poetry

Kuntaka, while illustrating his scope of vakrokti pervades very clearly all the other poetic elements in it.

This is how the minds of all the rhetoricians were working around the same property and were giving prominence to this or that element without leaving others totally aside

And hence in my opinion Dhvani has swallowed all the other elements except Alaṃkāra like the very mouth of Surasā which could swallow every thing but one Hanūmān As Hanūmān was wiser than Surasā. Alaṃkāra too is more mighty than the theory of Dhvani

[ K 20 ]

I. The simile in K 24 is derived from the vadic science, where fire is called 'Annāda' the eater of 'Anna'—the edible goods and soma is named as 'Anna'. These

two are the only elements which are the final entities and which beget the entire world phenomena. At the end the fire swallows the soma and remains all alone. So does the Alamkāra in poetry. It pervades even the all pervading element called Dhvani, if not made limited up to the figures of speech only

II, In Indian faith the heavenly garden of gods is never bereaved of spring So is the position of Alamkāra and poetry In nutshell 'No glory of garden can exist without spring and no poetry can exist without Alamkāra Adequacy as such —[ K 25 ]

अधुना अलंकारस्य काव्यात्मत्वं कण्ठरवेणैव ब्रूमहे

काव्येऽलङ्कार एवात्मा स एवास्मिन् स्थितो यतः ।
अन्यकायस्थितो धर्मः किमन्यत्रात्मतां व्रजेत् ॥२६॥
एवं सति न कोऽपि स्यान्मृतोऽस्मिन् मर्त्यभूतले ।
यावत् सर्वेऽपि निष्प्राणा न भवेयुः शरीरिणः ॥२७॥

26 Only Alamkāra is the soul of poetry, since that is the only quality which resides in the body of poetry. Any thing that does not live in one's body can never be accepted as one's soul

27. Otherwise none will be treated as dead even on this mortal earth till [ there remains even a single being alive or till ] all are dead.

किम् कथमिति भाव । न हि देवदत्तशरीरस्थेनात्मना यज्ञदत्त आत्मवानित्युदीर्येत । स हि देवदत्तशरीरस्थ एव धर्मो येनासावेवमुच्यते । एव सति सामाजिकस्थितेन रसेन काव्यस्य सात्मत्व निरुपपत्तिकमेव । येन च सोपपत्तिक सोऽलङ्कार एव काव्यकाये कृतस्थितिः ॥ २६ ॥

अन्यस्यात्मनान्यस्यात्मवत्त्वे कस्मिश्चिदेकस्मिन्नपि प्राणिनि प्राणिति मृते वा सति सर्वेऽपि जीविता वा उच्येरन्, मृता वा। ततश्च कृत-मन्येषा शरीराणा प्राणधारणेन । आपतित चैव चतुर्वेदविदावरस्य भगवतः सर्वपितामहस्य बालिशत्वम् । को ह्येवविधो भवेत् यस्तृणेनैव कार्यस्य सम्भवे पर्वतमुपाददीत ।

स्थितमेव काव्यकायस्थितेनैव धर्मेण काव्यस्यात्मवत्त्वम्, न त्वन्यदोयेन केनचिद् धर्मेणेति ।

एतच्चेदप्रथमतयाऽस्मदुपज्ञतया वा न नेयम्, कुन्तकेनापि "सालङ्कारस्य काव्यता[१]" इति ब्रुवाणेन घण्टापथस्यास्योन्मीलितचरत्वात्, वामनेनापि च सौन्दर्यस्यालङ्कारत्ववादिना[२] ॥ २७ ॥

Rasa is the property of reader who is not poetry. Therefore rasa can not be accepted as soul of poetry. If we accept rasa as soul of poetry our whole system of logic is disterbed. Logic does not allow any thing as soul of body with which it is not physically connected. [ K. 26 ]

---

१. वक्रोक्तिजीविते १।६—'अलङ्कृतस्य काव्यत्वम्, न पुन. काव्य-स्यालङ्कारयोग. ।

२. काव्यालकारसूत्रम् १।१।२ ।

## अलङ्कारलक्षणम्

### [ पूर्वपक्षाः ]

अथ 'किस्वरूप एषोऽलङ्कारो यदर्थमेतावानाडम्बरः.' इति प्रश्ने—

१ "काव्यशोभाकरा धर्मा अलङ्कारा" इति दण्डी।

२ "गुणा खल्वेवंविधा, न त्वलङ्कारा·, ते हि काव्यशाभातिशय हेतव" इति वामनः।

३ "य एव गुणास्त एवालङ्काराः, उभयेषामपि समवायेनैवावस्थानादि"ति [1]उद्भट-जयरथौ।

४. आस्ता नाम गुणा अलङ्काराश्चेत्युभयेषामपि समवाय एवाधेयतावच्छेदक. सम्बन्ध., साक्षात्पारम्पर्येण नित्य-वैकल्पिकत्वेन च रसोपकारकत्वादस्त्यनयोर्भेद.। तत्र साक्षादव्यभिचारेण च रसोपकारका रसैकनिष्ठा धर्मा गुणा·, शब्दार्थ-रूपाङ्ग-द्वारा तत्स्थतया कदाचिदुपकारकाश्चालङ्कारा' इत्यभिनवगुप्तमम्मटप्रभृतय ।

५ रसादिव्यङ्ग्यभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता स्वरूपसम्बन्धेन तदवच्छेदकत्वमलङ्कारत्वमि"ति च वैद्यनाथ-देवशङ्करप्रभृतयो नव्या।।

सेय सुबन्धुरा[2] कथा। अपि श्रुता समीक्षावेतालेन भवता।

आ वेताला एव वय समीक्षावधूयौवनपरिभोगे। य इमेऽवच्छेदकावच्छिन्नता-मायिका नव्यास्तत्र भवता का मति. ?

अलमेतेषा कथया। एते हि नालिकया जल पाययन्ति, न साक्षात्। तटस्थं खल्वेषामलङ्कारलक्षणमिदम्, न स्वरूपस्पर्शि।

---

१. काव्यप्रकाशस्याष्टम उल्लासेऽलङ्कारकारिकावृत्तौ मतमिदमुपलभ्यते। टीकाकाराश्च भामहवृत्तौ उद्भटस्येद मतमिति टीकन्ते। जयरथ· पुनरलङ्काविमर्शिन्याम् 'लौकिकाना हारादीनामलङ्काराणामलङ्कार्येण सह सयोग. सम्बन्धः, काव्यालङ्काराणा पुनरलङ्कार्येण सह समवाय. सम्बन्ध.' इति पुनरुक्तवदाभासालङ्कारप्रकरणे। द्र० अस्माकमलङ्कारसर्वस्वहिन्दीभाष्यपुस्तकस्य ४८ पृष्ठे।

२ बन्धुरा उद्घातिनी-त्यपि।

यत्र तादृशी अवच्छेदकता तत्रैवाऽङ्कारत्वमिति सैव कथा या भवन्नामधेयपूर्वार्ध[१]विश्रुताया' कस्याश्चित् पुण्यसरितस्तटभुवि। "य: कौमारहर' स एव हि वर" इति ब्रुवाणाया कस्याश्चिच्चपलाया।

आ ज्ञातम्, त्रिशङ्कवो भवन्तोऽलङ्कारलक्षणपरिज्ञाने। किन्तु वेतालीकृता वय किं नु ब्रवामाश्रद्धेयवचना ?

अथ 'बालादपि सुभाषितमिति वर्त्तेतेतरा प्राचामापद्धर्म । तेन भवानपि न नास्ति श्रोतव्यवचन इति स्पृश्यता भवतापि मार्ग एष' इत्युच्यते, तद्

अवदधीरन्नार्या विषवैद्यानामस्माक स्यादेव कदाचिदुपशमायालङ्कारलक्षणचिकित्सा।

अवहिता एव, उच्यतामिति चेद्

इयमेषा—

[ सिद्धान्त. ]

**'अलं-भावो ह्यलङ्कार:', स च सौन्दर्यतत्कृतो: ।**
**विभक्तात्मा विभुर्जीवब्रह्मणोश्चिद्घनो यथा॥२८॥**
**अनलो भगवान् मूलभूतौ विश्व-चमत्कृते: ।**
**पुष्पवन्तावभिव्याप्य यथा सम्यग् विराजते ॥२९॥**
**अलङ्कारोऽपि काव्यस्य तथा सौन्दर्य-तत्कृतो: ।**
**अभिव्याप्य स्थितस्ताभिस्ताभिर्व्युत्पत्तिभिर्विभु: ॥३०॥**

**E New concept of Alamkāra**

28 'Alamkāra is an Adequacy',
and that holds two-fold nature
(i) Saundarya or beauty itself and
(ii) the source of the beauty
The Alamkāra or Adequacy pervads both, as the spirit pervades (both) Jeewa and Brahman

१ 'रेवाप्रसाद '–इति नाम्न: पूर्वार्धो 'रेवा' । तन्नामा पुण्यसरित् नर्मदा ।

29. As, in both the manifestatives of worldly charm : the sun and the moon, only one Lord Fire stands with its full glory—

30. The Alamkāra stands for both : poetic charm and its resources likewise To fit the word Alamkāra in both the views one may investigate this and that etymology

अलभावोऽलत्वम् । तच्च पर्याप्ततापरपर्यायिपूर्णतारूपम् । सौन्दर्यं शोभा, तत् करोति जनयतीति तत्कृत् शोभाजननानि तत्त्वानि । 'सोऽहम्, अह ब्रह्म, ब्रह्मैवास्मि' इति वेदान्तमहावाक्यैश्च सुप्रतिपादितचर जीवब्रह्मणोरैक्यम् ।। २८ ।।

'एकयोक्त्या पुष्पवन्तौ सुधाकरदिवाकरावि'ति अमरवचनात् पुष्पवन्तौ सूर्याचन्द्रमसौ । एक एवाग्निर्द्वयोरप्यनयोर्विभ्राजमान इति वेदविज्ञानविद । तत्रापि यथा [1]कृष्णेऽपि चन्द्रमसि मूर्च्छिता रविरश्मयस्तमेत चन्द्रिकाऽमृतवर्षिण विदधति तथैव रूपकादीनपि सौन्दर्यं चमत्कारो वा तज्जनित. ।। २९ ।।

ताभिस्ताभिर्व्युत्पत्तिभिरिति । तत्र घञो भावकरणयोरेव विधानात् अलकृतिरलङ्कार इत्येका व्युत्पत्ति., सा चैषा सौन्दर्यं स्पृशति । अलक्रियतेऽनेनेति च द्वितीया व्युत्पत्ति , सा चैषोपमादीन् विसिनोति । तृतीया च व्युत्पत्तिः कर्मण्यणा अल [2]पर्याप्त करोतीत्यलङ्कार इति । अत्रालमिति द्वितीयार्थकमव्यय साय प्रातरिति सप्तम्यर्थकमव्ययमिव । सा चेय तृतीया व्युत्पत्ति. सौन्दर्यं, सौन्दर्यजनकानुपमादीन् विशेषान्, अन्याश्च तथाविधानर्थान्तरादीनधिकरोति । यथा चैतत् तत् प्रतिपादितमेवास्माभि प्रथमकारिकोपस्कारे ।। ३० ।।

---

१. चन्द्रबिम्ब हि मुख्यत कृष्णमेवेति ब्राह्मणवाक्येभ्यः प्रतीतचरम् ।

२. 'अल भूषण-पर्याप्ति-शक्ति वारण-वाचकम्' इत्यमरः ।

I. Again the vedic concept of cosmology is adopted to clear the pervassiveness of Alamkāra The fire is the only element which shines in the sun as well as in the moon, and hence fire is the only reality of all the illumining goods.

II For 'Alamkāra'-word two etymologies are suitable. One कर्तृव्युत्पत्ति i e one which makes any thing adequate, by applying the अण् suffix fixed for the nominative case presided with the wordof an accusitive-case ending according to Pāṇini's sūtra कर्मण्यण् [ 2 3 1 ] The word अलम् willestand here for the accusitive cas just like the words सायम् and प्रात for locative Another etymology is well known and that is भावव्युत्पत्ति which means the Beautification itself. The letter one is based on the suffix घञ् [ Pāṇini's sūtra 3 3 117 applicable to both ल्युट् and घञ् ], —[ K 30 ]

अलंभाव एव दृष्टान्तान्तराणि—

वटस्य बीजं वृक्षश्च महाञ्छाखाशतैर् वृतः ।
तस्य चित्रं च यत् तत्राप्यलंभावोऽयमीक्ष्यताम् ॥३१॥
शैलः शिला तथा मूर्तिर्मृत्स्ना पिण्डस्तथा घटः ।
एतत्त्रिकेऽप्यलंभावः सुमनोभिरवेक्ष्यताम् ॥३२॥

Other Illustrations to Adequacy .

(*a*) *Natural*

31. This Adequacy may be observed in the [ very small ] seed of fig–(vaṭa)–tree. With its hundreds of trunks and branches the fig-tree itself may be taken as an example to realize this adequacy.

And again its (small) replica, photo, picture, painting or idol may also be put forth to represent the same in its fullness.

*(b) Cultural*

32 So are—mountain, rock and image, as well as clay, globe and vessal. Even among these two groups of the above three goods the vision of fullhearted critic may pick-up adequacy very well.

अलंभाव एष संकोचविस्तरान्यतरपरिगतविभव इति दृष्टान्तमुखेन ब्रूमो वटस्येति। तथाहि वटस्य यद् बीज तद् अतीव लघुकायम्, यश्चास्य वृक्ष. स शाखासाहस्रोपरिवृतो विततमूर्त्ति॰। अस्य च सुमहतो वटवृक्षस्य यच्चित्र तत् पुनरपि स्वल्पशरीरमेव। लभ्यत एव चैतेषु त्रिष्वपि पर्याप्ति. प्रत्येकपर्याप्ता, ततश्च लभ्यत एव किमप्यपूर्वं सौन्दर्य सर्वेष्वप्येषु पृथक्-पृथक्। एव बीज-वृक्ष-वृक्षचित्र-दृष्टान्तेन व्यञ्जित॰ सक्षेपसम्पुटितो विस्तर, समाससम्पुटितो व्यासश्च विस्तरस्वरूपः। अत्र च परिवर्तने रुचिभेदः, अरुचिनिरासश्च मूलम्। दृश्यन्ते हि क्रमाभेदमादाय प्रवर्त्तमानेषु वैरस्यकालुष्याणि प्रतिनवक्रमैकपरिमार्जनीयानि। अत एव श्रीहर्षोऽपि

जगति मिथुने चक्रावेव स्मरागमपारगौ
नवमिव मिथ॰ सम्भुञ्जाते वियुज्य वियुज्य यौ।
सततममृतादेवाहाराद् यदापदरोचक
तदमृतभुजा भर्ता शम्भुर्विष बुभुजेतराम्॥
(नैष० च० १९.३४)

इत्येव परिवर्त्तने समधिका रुचि पश्यति। सर्वथा क्रमपरिवर्तनौपयिकश्चमत्कार एवालम्भावाय नियामक.॥ ३१॥

समास-व्यास-क्रममेव दृष्टान्तान्तरमुखेनापि ब्रूमहे शैल इति। शैलोऽतिविशाल, शिलापि शैलापेक्षया लघीयस्यपि न न विशाला, मूर्तिः पुनर्नातिविशाला। चमत्कार· पुनरुत्तरोत्तरमारोहक्रमेणावरोहक्रमेण वातिभूयान्। एवमेव मृत्तिका, पिण्डः, घटश्चेति त्रितयमपि तथैव निस्सीम-महासीम-लघुसीमतया प्रथितम्। तत्रापि आरोहावरोहक्रमेण चमत्कारः प्रतिव्यक्ति यथातद्रुचि भिन्न। अत्र बीज-वृक्ष-वृक्षचित्र-दृष्टान्तो[1] नैसर्गिक·, शैल-शिला-मूर्तिदृष्टान्तोऽर्धनैसर्गिक[2], मृत्तिका-मृत्तिकापिण्ड-घटदृष्टान्तश्च मानुषशिल्पबहुल इति निपुणमतिभि· स्वयमेव विभावनीयम्।

नन्वेतेन सुमहतोपन्यासेन प्रकृते किमायातमिति चेत् रामायण रघुवशस्य द्वादश सर्गं चानुशीलय, महाभारत भारतचम्पू वेणीसहार वा। कस्तत्र विशेष, चमत्कारापरपर्याय पर्याप्तभावमृते। मूर्तिदृष्टान्तश्चात्र सर्वविधशिल्पसग्राहकः। मूर्तौ हि न भवति केवलमाकारमात्रम्, अलकरण-स्यापि तत्र प्रतिष्ठापनात्। तदित्थ व्याख्यात एषोऽलम्भावापरपर्यायः अलकार ॥ ३२ ॥

I These illustrations represent the three stages starting from elaboration and tending towards abridgement of samskrta-literature—

(i) the samhita-stage,

(ii) the upanisad-stage and

(iii) the sūtra-stage and again

(i) the stage of the Rāmāyaṇa and Mahābhārata

(ii) the stage of epics like Kumārasambhavam and

(iii) the stage of stray poems like the satakas by Amaru and Bhartrhari or the anthologies of Hāla sātavā-

---

१. चित्रस्य जलादिष्वपि दर्शनान्नैसर्गिकत्वमपि।

२ शालग्रामशिलाया भगवतो नर्मदेश्वरस्य च प्रतिमाया अपि नैसर्गिकत्वमेव। मनुष्यघटिताया मूर्तौ तु मूर्तिशब्दो भूम्ना प्रचलित इत्यर्धनैसर्गिकत्वोक्तिः।

han and others Where do we not realize this very adequacy of an effective expression ? Here both : the elaboration and the abridgement are equally adequate.

II. By the word picture one may hold here its reflection in the water There-in the image of picture is a natural one. From the point of view of this naturality, same is the case of seed and tree

III The idols too are of two kinds one which is natural svayambhū Just as the idol of Śālagrāma, of Narmadeś'vara Śiva and all the Jyotorlinga's of Śamkara. Other category of idols is where they are sculptured by the artists and enshrined by the vedic ceremonies But the vessal represents the craft only which totally depends on the human offorts

IV With help of the analogies of reflection, idols and vessal every type of poetry is indicated Poetry may be of premeditated nature or sponteneous one In either case there may be elaborations and abridgements What would appeal to the particular reader can-not be decided beforehand The choice of reader would also be of changeable trends An abridgement may inspire one to go through its elaboration and an eloboration too may trans form one's interest in its abridgement This way the individual difference has no meaning in the enjoyment of an artistic work.

अलकारस्य स्वरूपलक्षणमुपपाद्य साम्प्रतमस्य पूर्वाचार्यप्रतिपादितां वाच्यता निराचक्ष्महे—

**अलंकारोऽपि वाच्यत्वं नैव स्पृशति जात्वपि ।**
**सौन्दर्यमात्रोल्लापेऽपि स्याच्चत्कृतिरन्यथा ॥३३॥**

तत्रैव युक्त्यन्तराणि—

**वाक्यार्थ एवालंकारो वाक्यार्थश्च समन्वयः— ।**
**पदार्थानां, स संसर्ग - मर्यादा - मात्र - गोचरः ॥३४॥**

33. Alamkāra . adequacy and figures of speech both, too can not be caught into words under any circumstances Other-wise charm should be felt even on the simple utterance of the word 'beauty'

*Other argumet*

34 The Alamkāra is, or resides in, the syntactical meaning and the syntactical meaning is only relativity lying in the meanings of constituent word of sintax ( See Page 61 )

स्थितमेतद् यद् द्विविधत्वमलकारस्य सौन्दर्यात्मना, तत्प्रयोजकीभूतोपमाद्यात्मना च । तत्र यदाद्यमस्य रूप तस्य रसन्यायेनैव सामग्रीमात्रोदितत्वम्, न तु सौन्दर्यादिशब्दवाच्यत्वम्, केवलस्य सौन्दर्यादेः शब्दस्य प्रयोगात् सौन्दर्यानुभवस्यानुदयात्, ऋतेऽपि च तत्प्रयोग सामग्रीसद्भावे तस्यानुभवस्य सार्वजनीनत्वात् । उल्लाप. उच्चारण प्रयोग इति यावत् । चमत्कृतिसारो ह्यलकार. । नास्ति च सौन्दर्यादिशब्दमात्रप्रयोगे सा । यत्र चास्ति सा चोपमानोपमेयादिसामग्री । ततश्चान्वयव्यतिरेकाभ्या स्थित 'सौन्दर्यरूपोऽलकार' सौन्दर्यादिशब्दवाच्यतां न स्पृशती'–ति ॥३३॥

द्वितीयस्य च रूपस्य वाच्यतासहत्वमुदीरितचरमेव ध्वनिकारादिभि.[1] । अस्मन्मते पुनरत्रापि न ह्येव सम्भवति वाच्यत्वम् । अत्र हेतुः काव्यस्य वाक्यार्थात्मकत्वम् । यो हि वाक्यार्थ· स हि स्वप्नेऽपि न वाच्य, तस्य पदार्थसार्थसम्बन्धमात्ररूपत्वात्, सम्बन्धस्य चास्य ससर्गमर्यादामात्रभास्यत्वात् । ससर्गमर्यादा चाकाङ्क्षा । आकाङ्क्षा चैकपदार्थानुयोगिकाऽपरपदार्थ-प्रतियोगिक-ससर्ग-भासकः समभिव्याहार· । स चासौ वाचिको बौद्धश्चेति न मौनिग्रन्थे मौनिनैव वाच्यमानेऽव्याप्ति । असौ च न वृत्ति-शक्ति-वाचकत्वाभिधादि-शब्द-वाच्य-व्यापार-विशेषसतत्त्वः । एव च वाक्यार्थस्यावाच्यत्वे का नाम वाच्यताकथाऽलकारस्यापि वाक्यार्थरूपस्य वाक्यार्थनिष्ठस्य वा[2] । नन्वलकारस्य वाक्यार्थरूपत्वे वाक्यार्थनिष्ठत्वे वा कि नु प्रमाणमिति चेद् आनन्दवर्धन एव ध्वनिप्रस्थानपरमाचार्य । स एव हि "वाच्यः प्रसिद्धो य प्रकारैरुपमादिभिरि"—[3]ति, "शरीरीकरण येषा वाच्यत्वेन व्यवस्थितमि"[4]–ति, "अलकारविशेषरूपेणार्थेने"—[5]ति च ब्रुवाणोऽलकारस्य वाक्यार्थरूपतायाम्, "शब्दार्थशरीर तावत् काव्यम्, तत्र शब्दगताश्चारुत्वहेतवोऽनुप्रासादय·, अर्थगताश्चोपमादय"[6] इति ब्रुवाणश्च वाक्यार्थनिष्ठताया प्रमाणम् । द्वितीयपक्षे चास्य प्रथमपक्षाय प्रमाणत्वेनोपस्थिते "वाच्य प्रसिद्ध" इति, "शरीरीकरण"—मित्यादि वचने अपि समर्थके प्रसिद्धशब्दस्य तत्सम्मत भूषितत्वरूपमर्थमादाय आदाय च "'वाच्यत्वेने"–ति पदस्याभिनवगुप्तेनापि दर्शित "वाच्यत्वे न" इतिच्छेदम् । एव सति "वाक्यार्थ एवालकार" इत्यत्र "वाक्यार्थ"–पदमलकारस्य

---

१. ध्वन्यालोकस्य १।३ कारिका

२ ध्वन्यालोकस्य २।३० कारिका

३ ध्वन्यालोकस्य २।३१ कारिकावृत्ति ।

४. ध्वन्यालोकस्य १।१ कारिकावृत्ति. ।

५. काव्यप्रकाशस्य पञ्चम उल्लासे व्यञ्जनासिद्धिशास्त्रार्थारम्भ ।

वाक्यार्थरूपतापक्षे प्रथमान्ततया नेयम्, वाक्यार्थनिष्ठतापक्षे पुन· सप्तम्यन्ततया ।

ननु "देवदत्त गामानये"–त्याद्युत्तमवृद्धवाक्य श्रुत्वा मध्यमवृद्धे सास्नादिमन्तमर्थ देशाद् देशान्तर नयति सति तच्चेष्टा हेतूकृत्याज्ञातोत्तम-भाषस्तटस्थ· श्रोता "अनेनास्माद् वाक्यादेवविधोऽर्थ प्रतिपन्न" इत्यनुमिनोति । ततश्च 'असत्यनयोः सम्बन्धे न ह्येवासौ प्रवर्त्तेत वाक्यमिद श्रुत्वा तादृशे कर्मणी"–त्यन्यथानुपपत्तिरूपयाऽर्थापत्त्या तयोरखण्डयोर्वाक्यार्थयोर् वाच्यवाचकभावलक्षण सम्बन्ध प्रतिपद्यते । पश्चाच्च 'चैत्र गामानय, देवदत्ताश्वमानय, देवदत्त गा नय' इत्यादिषु प्रयोगेषु आवापोद्वापाभ्या तस्य तस्य पदस्य तत्र तत्रार्थे पृथक् पृथक् शक्तिमवधारयति । एवमन्वयव्यतिरेकाभ्या प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्य एव शक्तिः, वाक्यार्थ एव चाखण्डो वाच्य' इत्यन्विताभिधानदिशा का नु विप्रतिपत्तिरलकाराणामपि वाच्यत्वे"—इति चेत्, साधु,

इदमत्र केवलमवधारयन्तु—"देवदत्त गामानये"–ति वाक्ये "गोकर्मकानयनानुकूल–व्यापाराश्रयत्वविशिष्टे" देवदत्ते गृहीता शक्ति भिन्नकर्मकेषु, भिन्नक्रियाकेषु, भिन्नकर्तृकेषु च "देवदत्ताश्वमानय, देवदत्त गा नय, चैत्र गामानय" इत्यादिषु व्याहारेषु कथकारमुपयुज्येते'–ति ।

यद्युच्यते–"तत्र पूर्ववाक्यगृहीता सम्बन्धगता विशेषास्त्यज्यन्ते, सबन्धसामान्य तूत्तरत्र वाक्यार्थबोध उपयुज्यते । एव चोत्तरत्र वाक्यार्थबोधे गृह्यमाण· सबन्धविशेषः पूर्ववाक्यार्थबोधागतेन सबन्धसामान्येनावच्छाद्यते, अवच्छाद्यन्ते चोत्तरवाक्यार्थगता· पदार्थाः परिहृत–सम्बन्धीय–विशेषैः पूर्ववाक्यार्थगतै· पदार्थै, सामान्यविशेषयो परस्परमविरोधात्, एव च नास्ति लेशोऽपि क्लेशस्ये'–ति, तर्हि प्रतिवाक्य शक्तिग्रहप्रसगादागत गौरव परिजिहीर्षद्भि, लाघवाय सबन्धसामान्य एव शक्तिर्गृह्येत, न तु सबन्धविशेषे, तर्हि कथ नु स्यात् सबन्धविशेषस्य बोधः सर्वजनानुभविकस्य । एव विनापि शक्ति सबन्धविशेषमवजिगमिषतामत्रभवतामपि मते परिणतमेवावाच्यत्व सबन्धविशेषस्य । ततश्च भक्षितेऽप्यपदार्थे

नह्येव शान्तो व्याधि। । यश्चासौ बालव्युत्पत्तयेऽखण्ड–वाक्याथ–शक्ति–ग्रहानुभवस्तस्य यथोपपत्तिस्तदुत्तरत्र वक्ष्यामः( ५७ कारिकया ) ।

स्यादेतत् । "घटमानये"–त्यादिषु कर्मतादोना घटादिषु निष्ठत्व–वृत्तित्वापरपर्याय–सबन्धविशेषस्य प्रत्ययायाभिधा–लक्षणा–दि–विलक्षणा काचन शक्तिर्वाक्यात्मके शब्देऽवश्य स्वीकार्या । वाक्यार्थोऽपि तयैवाव-बोध्येतेति तात्पर्यशक्तिवाच्यत्वादस्त्येव शक्तिस्पृष्टता वाक्यार्थस्य । साधु । आस्ता नामेषा । नास्ति ततो ह्यानि । वाच्यत्व तु वाक्यार्थस्य नोप-लक्षयामहे । अन्या हि तात्पर्याख्या शक्ति , अन्यच्च वाचकत्वम् । तात्पर्येण स्पृष्टेऽपि वाक्यार्थे न ह्येव स्पृश्यतेऽसौ वाचकत्वाख्येनाभिधाव्यापारेण । ततश्च न ह्येवानुपपन्न दिवाऽभुञ्जानस्य देवदत्तस्य पीनत्व रात्रौ भृश क्रियमाणभोजनस्य । अस्ति चात्रभवतामिय तात्पर्याख्या वृत्तिरनुत्थानप-राहता । कथमिति चेत् "आकाङ्क्षादि"–भिरेव तत्कार्यस्योपपत्तेः । तथा चोक्त काव्यप्रकाशकृता "आकाङ्क्षा–योग्यता–सन्निधिवशात् पदार्थाना समन्वय" इति तात्पर्यार्थस्य सकेतितार्थत्व निराकृतवता[१] ॥

यद्युच्येत शाब्दिकै· "असति शक्तिविशेषे कथ नामापूर्वार्थ–प्रतिपत्ति-र्वाक्यादि"–ति तत्र पृच्छामः 'शक्तिरिय पदार्थस्मृतिमपेक्षते न वे'ति । अपेक्षते चेत् तादृश–शक्ति–सहकृतेनाकाङ्क्षादिनैव वाक्यार्थबोधे कृतमेतेनान्तर्गडुना वाक्यगतेन शक्तिविशेषेण ॥ ३४ ॥

The relativity is always denoted by the part-ship ( anuyogitva ) and caunterpart-ship ( pratiyogitva ) hidden in the related meanings or the units of syntactical meaning as a hole. Both the attributs ( anuyogitva and pratiyogitva ) depend on the desire of speech ( vivakṣā ) in the speaker All these—desire, part-ship, count.r-part-ship and relativity—are beyond the reach of the capacity called abhidhā or expression in word.

---

१. काव्यप्रकाशस्य २ उल्लासारम्भे ।

Thus how can the syntactical meaning be expressed by the words, limited, only upto the expression of first meaning or the outer constituent of the final full-meaning called vākyārtha.

**प्रातिभत्वं च वाक्यार्थे दृश्यते तत्त्वदर्शिभिः ।**
**वाक्य - वाक्यार्थयोर्यस्मात् संकेतो नास्त्यपूर्वयोः ॥३५॥**

35. The scholars, expert in analysis, proclaim the syntactical meaning as a result of intuition, because they know the truth that there does not exist any thing like the expression ( abhidhā ) between the two, sentence and its meaning.

इत्थ स्थितमेतद् यद् अवाच्य एवासौ यद् वाक्यार्थो नाम । अत एवास्य प्रातिभत्वमपि तीर्थकृत्सु प्रसिद्धम् । तथा च वाक्यपदीये तत्र-भवान् भर्तृहरि.—

विच्छेद-[1]ग्रहणेऽर्थाना प्रतिभान्यैव जायते ।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥ २।१४३ ॥
प्रमाणत्वेन ता लोक सर्व· समनुपश्यति ।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात् ॥ २।१४६ ॥
स्वरवृत्ति विकुरुते मधौ पुस्कोकिलस्य कः ।
जन्त्वादय· कुलायादिकरणे केन शिक्षिताः ॥ २।१४९ ॥
आहार-प्रीत्य-भिद्वेष-प्लवनादि-क्रियासु कः ।
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृग-पक्षिणाम् ॥२।१५० ॥
स्वभावचरणाभ्यास-योगाऽदृष्टोपपादिता ।
विशिष्टोपहिता चेति प्रतिभा षड्विधा विदुः ॥ २।१५२ ॥ इति ॥

अत्र विच्छेदग्रहणमपोद्धृत्य ग्रहणम् । तथाहि वाक्यार्थादखण्डादपि

१. 'विच्छेदाऽग्रहण' इति पाठोऽपि कल्प्येत । द्र० भोजोऽत्रैव ३५-वृत्त्यन्ते ।

पदार्था अपोद्धृत्य गृह्यन्ते 'एतेष्वस्यायमर्थ' इति। एषा ह्येका प्रतिभा। सेय पदार्थग्राहिणी पदार्थ-रूपा वा। जाते च पदार्थग्रहणे तदनन्तरमन्याप्येका प्रतिभोदेति सा च वाक्यार्थरूपा, वाक्यार्थग्राहिणी वा। अन्यात्व चास्या नान्यद् ऋते तात्पर्याकलनौपयिकान्वयरूपत्वात् तद्ग्राहकत्वाद् वा। यच्चेद तात्पर्याकलनम् तद्धि प्रत्यात्मभिन्नम्। अत एवाचार्याणा प्रस्थानभेदा। यदेव ब्रह्मसूत्र भगवत्पादैराद्यशङ्कराचार्यैरवागामि, तदेव तदितरैरपि महात्मभिः। सन्ति च तेषा तत्र भिन्नभिन्नैर्वैदपर्यधी'। कस्यचिद् अद्वैते, कस्यचिच्च विशिष्टाद्यद्वैते। 'भक्त्या गुरा'-वित्याद्येकमेव कालिदासपद्यमेकेनान्यथा व्याक्रियते साधारणार्थमात्रसीमिततया, अन्येन चान्यथा नन्दिन्या प्रसन्न-विद्यात्वमभिवीक्ष्य समर्पितप्राणे तपोमहति विद्यार्थिनि तस्या स्वप्रभाव-प्रतिपादनपरतया। अत्रैव हि परिसमाप्ता सर्वाप्यान्वीक्षिकी विदुषाम्। इदमेव हि परायण सर्वेषां योगरहस्यानाम्, इयमेव च भू सर्वासामपि उपनिषदाम् अर्थप्रतिपत्ते.। अत एवोक्त राजशेखरेण 'अप्रतिभस्य पदार्थसार्थ' परोक्ष इव, प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव। यतो मेधावि-रुद्र-कुमारदासादयो जात्यन्धाः कवयः श्रूयन्ते' इति[1]। अत एव चोक्त भवभूतिनापि 'अर्थ वागनुवर्त्तत'[2] इति, भर्तृहरिणापि 'एकस्मिन्नपि दृश्येऽर्थे दर्शन भिद्यते पृथगि'[3]-इति। तात्पर्यार्थस्याविलम्बमेवाकलन प्रतिभेति महामाहेश्वरस्तत्रभवानभिनवोऽपि "समाधान-नैर्मल्यात्मिका प्रतिभा इति तत्रभवद्भर्तृहरिप्रभृतय"[4] इति। यच्चेद वाच्यत्व तद्धि नियतवृत्ति यथा सुमेधसा तथैव दुर्मेधसामपि। सा हि न्यायाधिकरणभाषा। भिद्यते हि काव्योपनिषदादिपरिगृहीता भाषा तस्याः।

---

१ पुण्यराजेन रघुनाथशर्मभिश्चात्रान्यथैव व्याख्यायि।

२. उत्तररामचरितप्रथमेऽङ्के 'लौकिकाना ही'-ति पद्यरत्ने।

३. वाक्यपदीयस्य २।१३६ कारिका।

४ ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनीतृतीयभागस्य २०९ पृष्ठे।

प्रतिभा चेय स्वाभाविकी । यदुच्यते—

स्त्रीणामशिक्षितपटुत्वममानुषीणा
सन्दृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षपतनात् स्वमपत्यजात-
मन्यैर् द्विजैः परभृतः परिपोषयन्ति ।। इति-

प्रतिभावता तत्रभवता कालिदासेन । यच्चोच्यते तच्छिष्येण शूद्रकेण—

स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।
पूरुषाणा तु पाण्डित्य शास्त्रैरेवोपपद्यते ।। इति ।।

अत एव भावयित्रीत्व पश्यति प्रतिभाया राजशेखरः 'सा च द्विविधा, कारयित्री भावयित्री,च । भावकस्योपकुर्वाणा भावयित्री' इति । उच्यते फलमपि भावयित्र्यास्तेनैव 'सा हि कवे· श्रममभिप्राय च भावयति । तया खलु फलितः कवेर्व्यापारतरु·, अन्यथा सोऽवकेशी स्यात्' इति । इयमेव हि प्रतिभा तत्त्वाभिनिवेशमुपजनयति । यदुच्यते राजशेखरेणैव—

तत्त्वाभिनिवेशी तु मध्येसहस्र यद्येकः । तदुक्तम्—

शब्दाना विविनक्ति गुम्फनविधीनामोदते सूक्तिभि
सान्द्रं लेढि रसामृतं विचिनुते तात्पर्यमुद्रा च यः ।
पुण्यै· सघटते विवेक्तृविरहादन्तर्मुख ताम्यता
केषामेव कदाचिदेव सुधिया काव्य-श्रमज्ञो जनः ।।

इति,

अभियोगे समानेऽपि विचित्रो भावने क्रम· ।
तेन विद्म प्रसादोऽत्र नृणा हेतुरमानुष ।।

इति च ।

अस्ति चैवविधस्य भावकस्य कालिदासीये 'स्त्रीणामशिक्षिते'-त्यादिनि पद्य एव भावनाया भेदः, यदसावत्र शकुन्तलाया मातुरपि व्यवहारमाकलयति शकुन्तलावदेव भवति चाशङ्कितचेता· । अन्यः पुनः प्रथममेव परभृद्वृत्तान्तमात्मसात्कृत्य गद्गदायते । इयमेव 'अस्मान् साधु

विचिन्त्ये'–त्यस्मिन्नपि पद्ये। भावकाः 'सा, मान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वये'–ति, 'सा मा अन्यप्रतिपत्ती'–ति चच्छेदेनार्थान्तरमपि चाकलयन्ति।

ततश्च स्थितमेतद् यद् येय प्रतिभा सा पदार्थसार्थोपपादितामन्वय-बुद्धिमतीत्य तात्पर्यं यावत् प्रसृमरति, प्रसूते च तांस्तानपूर्वानपि भावार्थान्। अस्ति च तीर्थकृतामेव वचनम् 'यत्परः शब्दः स शब्दार्थ' इति। एतदेव मनसिकृत्य भर्तृहरिरपि प्रतिभामिमाम् 'अनाख्येयाम्, प्रत्यात्मवृत्तिसिद्धाम्, प्रतिभावताऽप्यनिरूप्याम्, निर्विचारमेवार्थ-सार्थोपश्लेषयित्रीम्, सार्वरूप्यापन्नाम्, इतिकर्तव्यत्वपर्यन्तानुधाविनी च प्रतिशृणोति—

इद तदिति सान्येषामनाख्येया कथञ्चन।
प्रत्यात्मवृत्तिसिद्धा सा कर्त्रापि न निरूप्यते ॥ २।१४४ ॥
उपश्लेषमिवार्थाना सा करोत्यविचारिता।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते ॥ २।१४५ ॥
साक्षाच्छब्देन जनिता भावनानुगमेन वा।
इतिकर्तव्यताया ता न कश्चिदतिवर्त्तते ॥ २।१४६ ॥ इति ॥

स्वाभाव्यजनितत्वमपि प्रतिभाया अस्या स एव भगवानेवमाह—

यथा द्रव्यविशेषाणा परिपाकैरयत्नजाः।
मदादिशक्तयो दृष्टाः प्रतिभास्तद्वता तथा ॥ २।१४८ ॥इति॥

सा चेय जन्मान्तरीयापि भवति, इहजन्मार्जितापि च। यदुच्यते तेनैव—

भावनानुगतादेतदागमादेव जायते।
आसत्तिविप्रकर्षाभ्यामागमस्तु विशिष्यत ॥ २।१५१ ॥ इति ॥

अत्रागमः शब्दब्रह्म। स च भावनानुगतः। भावना चासन्ना ऐहजन्मिका, विप्रकृष्टा च जन्मान्तरीया। शब्दब्रह्म चात्र वाक्यरूपम्। तस्मात् जायमानोभयविधा भावना भगवती प्रतिभैव। एवं च—

**प्रतिभाया षड्विधत्वम्—**

१. स्वभावोपपादिता : स्वभावो निसर्गः, यथा सुप्तस्य प्रबोधः, आ सर्गाद् आ च प्रलय विद्यमाना विश्वस्थितिर्वा। तस्या अपि प्रलयरूपसषुप्तेर्जाग्रिदवस्थामापन्नत्वात्।

२ चरणोपपादिता : चरण तपश्चरणम्। दृश्यते हि दैवतविशेषस्योपासनया श्वोभाविन्याः परीक्षायाः प्रश्नपत्रस्याद्य रात्रौ आनुपूर्व्येणैव दर्शनम्। यश्चात्र—

पुरुषस्य पदेष्वजन्मन. समतीत च भवच्च भावि च।
स हि निष्प्रतिघेन चक्षुषा त्रितय ज्ञानमयेन पश्यति॥

इति कालिदासवाक्याश्रितो हरेरेव वसिष्ठदृष्टान्तः स तु योगेन गतार्थः —

"क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रद" इति
"सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम्"

इति च वसिष्ठस्य योगविद्याविचक्षणतायाः कालिदासेनैव प्रतिपादनात्। अस्ति च तपोऽपि नियमरूपस्य योगाङ्गस्य सोपानम्।

३. अभ्यासोपपादिता : अभ्यास. पौनःपुन्येन प्रवृत्तिः। तेन च जायमाना प्रतिभा रत्नादीना जात्यत्वस्येव विज्ञानम्। अस्मादृशा यदा काचादिभ्योऽपि मण्यादीना प्रविभागो दुर्विज्ञेयः, तदा का नाम कथा विविधेषु मणिषु कृतपदस्य तारतम्यस्य प्रतिपत्तेः। वैकटिक एव हि रत्नतत्त्वविदः, सहृदया एव च रसज्ञा इत्युक्तमेवानन्दवर्धनेनापि। शिल्पगताना सूक्ष्मत्वादीना परिज्ञानेऽप्यसावाभ्यासिक्येव प्रतिभा मूलम्। कूटकार्षापण को हि प्रत्यभिजानीयाद् ऋते सौवर्णिकम्।

४. योगोपपादिता : योगः समाधिः। तेन हि जायमाना प्रतिभा वसिष्ठदृष्टान्तेन स्पष्टभूयिष्ठाऽनुपदोक्तेन। मृत्युञ्जयो भगवान् भवानीजानिश्चात्रापरो दृष्टान्तः[1]। यदुक्तं माहिमाचार्येण व्यक्तिविवेके—

रसानुगुण-शब्दार्थ-चिन्ता-स्तिमित-चेतसः।
क्षण स्वरूप-स्पर्शोत्था प्रज्ञैव प्रतिभा कवेः॥
सा हि चक्षुर्भगवत-स्तृतीयमिति गीयते।
येन साक्षात्करोत्येष भावाँस्त्रैकाल्यवर्तिनः॥इति॥

तथा च योगसूत्रम् 'भुवनज्ञान सूर्ये सयमात्', 'प्रातिभाद् वा सर्वमि'-ति[2]।

५. अदृष्टोपपादिता : अदृष्ट नाम साहजिकः सस्कारविशेष। स च आवेशिक इति भर्तृहरिः, यथा प्रेतादीना परकाय-प्रवेशादिसस्कारः। महापुरुषादिप्रसादजन्यो बालादिषु क्रियमाणसाक्षात्कार इति तु श्रीहर्ष-जगन्नाथौ। तद् यथा—

श्रीहर्ष.—

पुष्पैरभ्यर्च्य गन्धादिभिरपि सुभगैश्चारु हसेन मा चे-
न्नियन्ती मन्त्रमूर्ति जपति मयि मति न्यस्य मय्येव भक्तः।
तत् प्राप्ते वत्सरान्ते शिरसि करमसौ यस्य कस्यापि धत्ते
सोऽपि श्लोकानकाण्डे रचयति रुचिरान् कौतुकदृश्यमस्याः॥

इति नैषधीयचरिते [ १४।९०-पद्यम् ]।

जगन्नाथश्च—

'प्रतिभा च काव्यघटनानुकूलशब्दार्थोपस्थितिः। तस्याश्च हेतुः क्वचिद् देवतामहापुरुषप्रसादादि-जन्यमदृष्टम्' इति रसगङ्गाधरे।

---

१. सर्वमपि व्याख्यानमिद पुण्यराज, स्वयमेव भर्तृहरिं चातिवर्तते लेखतः।

२. सूर्यः सूर्यरन्ध्रं सुषुम्णेति वाचस्पतिमिश्रः।

६. विशिष्टोपहिता विशिष्टेन कृष्णद्वैपायनादिना सजयादिषूपपादिता विप्रकृष्टतम–महाभारतयुद्ध–प्रत्यक्ष–प्रज्ञा। यथा च श्रीकृष्णेनैव 'दिव्यं ददामि ते चक्षुर्येन मा विषहिष्यसे' इति पार्थे विश्वरूपदर्शनावसरे ॥

तस्या अस्या षड्विधाया अपि प्रतिभाया अदृष्टोपपादितत्वेन प्रतिपादिताया सहेतुकाया तद्भिन्नाया च स्वयभुवि प्रतिभायामेवान्तर्भावः। तथा हि सहेतुकाया. प्रथमेऽदृष्टजन्यतया स्वीकृते भेदे योग–जन्याया विशिष्टोपपादितायाश्चान्तर्भावः, तस्या एव द्वितीये भेदेऽभ्यास–चरणोपपादितयोः, स्वयभुवि चादृष्टजन्याया. स्वाभाविक्याश्च। यद्वाऽदृष्टोपपादिताया अपि सहेतुकाया. प्रथम एव भेदेऽन्तर्भावः। स्वयभुवि केवलायाः स्वभावोपपादिताया। एव यदेव भर्तृहरौ षड्विधत्व तदेवालंकारिकेष्वस्मासु द्विविधत्व प्रतिभायाः। सति च प्रातिभत्वे कीदृशी किल बाह्यता वाक्यार्थस्य।

वाक्यार्थस्यास्य प्रतिपादक वाक्यमपि अखण्ड सखण्ड चेति प्रथम द्विशाखीकृत्य, प्रथमे सघातवर्त्तिनी जातिम्, अनवयवमेक शब्दम्, एकबुद्धिविषयत्व च गणयित्वा द्वितीये यद् आख्यातशब्दस्य, क्रमम्, सघातम्, आदिपदम्, पदगतपृथक्साकाङ्क्षत्व चादाय क्रमेण त्रयः पञ्च चेति सकलनेनाष्टभेदभिन्न वाक्यपदीयादिषु प्रसाधित तत्रातिप्रसक्तिरिति काव्यप्रकाशागत सबद्धार्थप्रतिपादकत्वमात्रसीमितत्व वाक्यस्यादाय सतुष्यामः।

भवति च वाक्यमपूर्वम्। ततो न ह्येव सभवति तत्र शक्तिग्रहः। ततश्च कथकारमुपपद्येत तदर्थस्य शक्यत्वम्, स्वयमप्यपूर्वता बिभ्राणस्य। एवमपि प्रातिभत्वमेव वाक्यार्थस्य न तु वाच्यत्वम्। अत्रैव च दृष्टान्तो मृगपक्षिणाम्। तथा च कालिदासः—

चूताङ्कुरास्वाद–कषाय–कण्ठ पुस्कोकिलो यन्मधुर चुकूज।
मनस्विनीमानविघातदक्ष तदेव जात वचन स्मरस्य ॥–ति

कुमारसम्भवे पुंस्कोकिलस्यैव या कषायकण्ठतामुपनिबबन्ध तामेव स्मरत-कितरामत्रभवान् भर्तृहरिः। 'स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलः कथमि'-ति पाठे पुनरेष एव पक्षो बलीयान्। कलविङ्कादीनां गर्भाधान-क्षणपरिचयोत्तरं ग्रीष्मारम्भे च नीडनिर्मितौ या प्रवृत्तिः सापि स्वाभाविकी। मृगाः पक्षिणश्च सुस्थत्व एव आहारे प्रीतिमन्तो दृश्यन्ते, रुग्णत्वे च विनाप्यगदकारदेशनाम् आहारेऽभिद्वेषिणः, जातमात्र एव चैते जलाशयेषु विनाप्यभ्यासलेशं प्लवन्ते[1], दृश्यन्ते च केचन ग्रामसिंहाः आघ्राणमात्रेणैव चौरादिविज्ञानकुशलिनः। तदिदं सर्वमपि जात्या जन्म-नैव प्रत्यन्वयं प्रतिजाति प्रकृत्यैव सिद्धमिति भागवती लीलैवास्माभिः साञ्जलिबन्धमुपश्लोकनीया। सैव च कथा वाक्यार्थविज्ञाने, पदपदार्थ-विज्ञानानपराधीने।

एतदेव च सर्वमभिसन्धाय भोजदेवोऽपि—

स्वं स्वमर्थमभिधायोपरतेषु पदेषु पदार्थप्रतिपत्त्यनन्तरमुप-जायमाना "इदं तदि"-ति व्यपदेश्या अनुपदेशसिद्धा हिताहित-प्राप्तिपरिहारहेतुः प्रवृत्त्यनुकूला बुद्धिः प्रतिभा। तथाहि पदनिबन्ध-नानां पदावयव-निबन्धनानां चार्थप्रत्यवभासमात्राणामविच्छेदेन प्रवृत्तौ पदार्थैः क्रमेण गृह्यमाणैराहितसंस्कारासु बुद्धिषु सर्वार्थ-प्रत्यवभाससंसर्गानुगृहीता प्रत्यस्तमित-भेद-प्रत्यवभासा प्रवृत्तिफल-प्रसवानुमेया अभिन्नजातीयैव प्रतिभा प्रत्यात्मं विवर्तत'-इति

शृङ्गारप्रकाशे[2] प्रतिभाया वाच्यवृत्त्युत्तीर्णत्वमेव प्रतिपेदे। अत्रास्य विवर्तशब्दः सविशेषं ध्येयः। तत्र भर्तृहरेरेव—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति

---

१. अस्मदुपज्ञ एषोऽर्थः। पुण्यराजेनान्यथापि व्याख्यायते।

२ शृङ्गारप्रकाशस्य ज्योशेरसंस्करणस्य २१३ पृष्ठे।

विवर्तवादो मूलतया नीयेत । अर्थस्य शब्दविवर्तात्मतायास्तेन शृङ्गार-प्रकाश एवान्यत्रापि प्रतिपादितत्वात् । तथाहि—

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्य-ग्राहक-सवित्ति-भेदवानिव लक्ष्यते ॥
ग्रहीतृ-ग्रहण-ग्राह्य-माया-पथ-परिच्युताम् ।
नमामि परमानन्दज्योतीरूपा सरस्वतीम् ॥ इति

यदन्य आहुस्तत्र यथा जलादय कल्लोलादिरूपेण, सर्पादय· कुण्डलादिरूपेण, नीलादयश्च चित्रादिरूपेण विवर्त्तन्ते तथा शब्दतत्त्वमविद्योपाधेस्तेन तेनार्थरूपेण तथा तथा विवर्त्तते[१] । इति ।

अस्मिश्च पक्षे यदा विवर्त्त एवार्थः शब्दस्य तर्हि कीदृशी नाम तत्र शब्दवाच्यता पदार्थरूपतायामपि, दूरे हि ततो वाक्यार्थं ॥ ३५ ॥

I. In the extenssive gloss on these nine ( 34–42 ) kārikās, I have discussed various points, though very subtle in their bearings, yet have clear but with brief hints in the translation too and that may suffice

II. Six kinds of Pratibhā as enumerated by Bhartrhari are as follows —

1. **Svabhāva Upapādita** Provided by nature as the awakening from sleep

2. **Caraṇa-Upapādita** Provided by penance or austerities like in Vasistha who could see even the things inaccessible to the senses, as Puṇyarāja says. But Vasistha may be taken in the fourth category Pratibhā by austerities is a common factor of ours.

---

१. ज्यो० स० २११ पृष्ठे । द्र० अस्माकं 'भोजदेवस्य ध्वनिविचार'—इति सन्दर्भः ।

3. **Abnyāsa-Upapādıtā** Kept ın with exercise or practice, like the skill of demarkation of jewels, their different qualities and realities.

4 **Yoga-Upapāditā** : Flourished due to yogic exercise as in sage Vasistha who could catch all the things of all the three times and of all the three worlds [ Raghuvamsa I 74, VIII. 79. ]

5. **Adrsta-Upapādıtā** Brought by the impressions hidden in soul. For example a Ghost holds a capacity to enter other's body thereby, and beasts or snakes know the art of swimming by birth None is there to teach it them

6 **Visista-Upapitā** Penetrated or imposed by the supper natural power of yogin, deity etc. Example may be drawn from N C XIV 90, where it is said 'after performing the secret worship of Goddess Sarasvatī by the mantra, Cintāmaṇi, after only one year one can win such a tremendous power of poetic compositions that even an infant, if touched by this ascetic in head, can suddenly utter beautiful verses The fact is repeated by Paṇḍitarāja Jagannātha too in his expert discussion on Pratibhā at the beginning of his Rasagaṅgādhara

III It is only this very pratibhā or intuition which interprets one and the same word or sentence in different ways. This is why the purport of the Vākyārtha of sentence is but of an intuitional form.

IV. Again the writer of VP says 'pratibhā can not be defined by any intellectual, even by the person who is glorified with it ( Pratibhā ) In every genius it is a a new ane Within no time it transfofrms itself into the form of Interconnection of ( words ) meanigs and also into the forms of ( words ) meanings themselves. Though being of subjective-nature alone, it becomes objective too Pratibhā some times comes out directly from the words and some times from their conceptual repetetion ( Bhāvanā ) 'What should be done' becomes suddenly flashed, if the pratibhā is awaken [ VP II. 144-146 and ŚP. 213 JE ]

Rājasekhara says 'Pratibhā is some thing divine or a gifted power, [otherwise we should not feel difference in the concepts of one and the same statement from person to person. Why do they deffer in concepts though their endeavour to draw the purport from the same statement is similar

For Bhoja 'the Goddess of learning is the sudden glittering light of blissful soul and it turns all the three things perceptor, perception and perceptables, into one, discarding their illussive differences This description, though of sarasvatī, applies to Pratibhā or Intuition also.

V As the Indian linguists think that—

(a) The vākyārtha or the syntactical meaning is one entity and it does not have any part or fraction and

(b) It is but intellect and it has no outer form or existence.

In other words Vākyārtha is of subjective nature and not of objective one in any case.

VI In totality Alaṃkāra can-not be subjected by the word power, expression or abhidhā, because following two are the constituents of Alaṃkāra (i) figure and (ii) charm The latter one depends on the hyperbole which always lies hidden in the syntactical meaning. How can this hidden part of Alaṃkara be touched by the word or be cought by the language ? Of course, the better half of the alaṃkāra is beyond the reach of expression or abhidhā.

For example, there will be no difference between the follwing statements—

(i) Her eyes are big

(ii) Her eyes are as big as those of deers,

if one takes off the hyperbole from the latter one All the ancient rhetoricians maintian 'the hyperbole is a must for a statement to reach the position of Alaṃkāra'—

'Saiṣā sarvaiva vakroktir
Anayārtho vibhāvyate.
Yatnosyām kavinā kāryah
Kolaṃkāronayā vinā

[ Bhāmaha, 2 85 AV AB. MM, etc. ]

Vakrokti = Atisayokti = Hyperbole = Extravagance.

By the kārikās 33–42 and by the present note ( No. VI ) it is finally proved that both the parts of Alamkāra : figure and hyperbole are beyond the word-power called expression. [ k. 35 ]

ननु

'राज्ञः पुरुष' इत्यत्र यथा षष्ठ्याः सम्बन्धवाचकत्व सर्ववादि-सम्प्रतिपन्नम्, एवमेव 'दमयन्त्या मुख चन्द्र' इत्यत्र या दमयन्तीपदोत्तर प्रयुज्यमाना षष्ठी तस्या अपि अध्याहृतमेव सम्बन्धवाचकत्वम् ततश्च अलंकारस्यापि वाच्यत्वमेव सादृश्यरूपस्य, प्रतियोगिविषया सम्बन्ध-स्यापि तद्घटकत्वात्' इति चेत्, उच्यते—

**विभक्त्या वृत्तिभास्यो यः सम्बन्धस्तत्र केवलौ ।**
**प्रकृति - प्रत्ययावेव प्रतियोग्यनुयोगिनौ ॥३६॥**

36. The case-endins, of course, denote the relations, but all the same they are absolutely limited upto the meanings of the parts of words i. e. roots and suffixes In these cases the meaning of the roots and the suffixes become the parts and counterparts of relation, whereas syntactical meanings hold the relationship between themselves.

विभक्त्या षष्ठीविभक्त्या। राज्ञ इत्यत्र, दमयन्त्या इत्यत्र च प्रत्ययार्थरूप एव सम्बन्धो वाच्यः, न तु तमनुयोगीकृत्य राज-दम्पती-रूप प्रकृत्यर्थं च प्रतियोगीकृत्य विद्यमान· स.। अस्ति हि राज्ञ इत्यत्र राजपदार्थ. प्रतियोगी, षष्ठ्यर्थश्चानुयोगी। तथैव दमयन्त्या इत्यत्रापि। एव स्थिते प्रत्ययार्थरूपो यः सम्बन्धः स नाम भवेद् वृत्तिभास्यः, प्रकृति-प्रत्ययोभयगतस्तु स आकाङ्क्षादिभास्य एवेति नास्ति दोषः ॥ ३६ ॥

निगमः

तस्माद् रसादिन्यायेन नालंकारेऽपि वाच्यता ।
इवादिशब्दयोगस्तु सादृश्याद्येक—तत्परः ॥३७॥
तत्परत्वमपीदं नो वाच्य - वाचकताभिधम् ।
इवादेः स्पष्टतामात्रं सर्वत्र - मुपमादिषु ॥३८॥
अत एव च लुप्तात्वमार्थीत्वं चोपमादिषु ।
प्रतीयमानतां चापि मन्वतेऽस्मन्महत्तराः ॥३९॥

37. Hence like rasa and other elements of its catogery Alamkāra too cannot be called as expressed by words ( like their first meanings ). Though we find in some sentences words like 'iva' = 'like' and according to old rhetoricians it expresses ( by abhidhā ) Simile. However, it is only similarity which may be expressed by these words, but not the actul Alaṃkāra simile, as the word simile does not suffice to express the whole Alamkāra called upamā. In some cases words like 'iva' = 'like' too fail to denote the simile.

38. Therefore the words like 'iva' are effective only to make the simile clear. However they fail to express the simile as clearly as their own meanings like simitarity, etc. Here one should be aware of the fact that the 'clarity' is not the expression ( abhidha ).

39. This is the ground which is adopted by rhetoricions, our great ancestors to devide simile into

kinds like luptā, ārthī and even suggested [ All of them have no power called experession or abhidhā for similarity in the case of simile ].

रसादिन्याय' ३३-कारिकाव्याख्यान एवोक्त'। तत्र रसादीना यथा विभावादिसामग्रीमात्रलभ्यत्व तथैवोपमादीनामपि। उपमादिषु इवा'-दि-शब्दप्रयोग स्पष्टतामात्रपर'। तेनोपमाया वाच्यत्वोक्तिरसहृश्येव। अत एव वाचकलुप्तायामार्थ्यां च तस्यामिवादिशब्दप्रयोग विनाप्युपमानिर्वाह, प्रतीयमानाया च।

यदि च "इवा"-दिना वाच्य एवालङ्कारस्तर्हि 'त्वत्पुस्तक मत्पुस्तकमिव पीतवेष्टनकमि'—त्यत्रापि भवेन्नामालङ्कार। नास्ति चात्र सा, चमत्कारस्याभावात्। यश्च चमत्कार स हि शब्दशतैरप्यवाच्य एव। क्व कुत्र कस्मिन् शब्दे शक्तता शक्त पदम्, तद्भाव: वाचकत्वमिति यावत्॥ ३७–३९॥

आरोपो रूपकस्यात्मा वाचकस्तस्य तत्र कः।
एवंचाऽध्यवसानस्यातिशयोक्तौ क्व शक्तता ॥४०॥
पर्यायोक्तौ समासोक्तौ काव्यलिङ्गे च यः परः।
अप्रस्तुतप्रशंसावदर्थः कोऽत्रास्य वाचकः ॥४१॥

40. We may undertake for analysis some other figures of speech too. We would find that there is nothing which can be accepted as expressive factor. In Alaṁkāra called Rūpaka ( Metaphor ) imposition is regarded as its soul, but there is no word for its expression. So is the position of swallowing ( Adhyavasāna ) in the alaṁkāra called Atiśa-

yokti or Hyperbole. It too has no word for its expression ( abhidhā ).

41. In the alaṁkāra such as Paryāyoktam or Periphrasis, Samāsokti or model metaphor and Kāvyalinga or Poetic reason, we realize some hidden meanings other than the first ones, just as we find in the Aprastutapraśamsā or Indirect description. What are the words for these other meanings which may we called as expressive ?

कि च "इवा"-दिशब्दप्रयोगे स्यान्नामोपमायाः कथञ्चिद् वाच्यता, अलङ्कारान्तरेषु तु का गतिरिति निध्यायेत। तथा हि "आरोपो रूपकमि"-ति रत्नाकरोक्तरीत्या "मुख चन्द्र" इत्यत्र "घृतमायुरि"-त्यत्र च य आरोपः कस्तत्र तद्वाचक शब्द ? अतिशयोक्तेरपि निगीर्याध्यवसानाख्ये भेदे अध्यवसानमेव मूलम्। तच्च 'अनाकाशे कोऽय गलितहरिण. शीतकिरण' इत्यादौ 'चन्द्र' इत्यादौ 'आयुः' इत्यादौ च निगीर्णविषयकेषु स्थलेषु केन वा शब्देनोच्यते ? एषैव च स्थिति पर्यायोक्तादौ। तथा हि पर्यायोक्ते 'य प्रेक्ष्य चिररूढापी'-त्यादिषु 'इन्द्र ऐरावतश्च मद-मानमुक्तौ जाता'-वित्यस्य पर्यायवृत्त्या प्रतिपद्यमानस्यार्थस्य केन वा वाच्यत्वम् ? समासोक्तावपि 'अयमैन्द्रीमुख पश्ये'- त्यादिषु स्थलेषु नायिकानायकव्यवहारयोर्निशाशशिनोर्या प्रतीतिस्तस्याः को वा शब्दो वाचकः। अप्रस्तुतप्रशसाया च 'कस्त्व भोः कथयामि दैवहतकम्' इत्यादि-स्थले प्रकृत-निर्विण्णपुरुषवृत्तान्तः, 'काव्यलिङ्गे' च 'वपु.प्रादुर्भावादनुमितमिदमि'-त्यादिषु कार्यकारणभाव', उत्तरादिषु च 'वाणिजक' इत्यादिषु स्थलेषु प्रश्नादयः केषा वा शब्दाना वाच्याः ? अत एव चोपमादिविच्छित्तीनामपि व्यङ्ग्यत्व न नाभ्युपयन्ति पण्डितराजादय प्राचीन सम्प्रदाय निस्तुषीकृत्य। अत एव चानन्दवर्धनोऽप्यन्तरभावयन्निखिला

अप्युपमादिविच्छित्तीर्गुणीभूतव्यङ्ग्यनामनि काव्यभेदे—'गुणीभूतव्यङ्ग्यत्वं तेषा [ रूपकादीना ] तथाजातीयाना च सर्वेषामेवोक्ताना सामान्यम्। तल्लक्षणे सर्व एवैते सुलक्षिता भवन्ती'–ति [ ध्वन्यालोक ३।३६–वृत्तौ ]

स्फुट प्रतिजानानः, प्रत्याचक्षाणश्च शब्दार्थलङ्कारत्वमात्रप्रयुक्त काव्यभेदपाश[1]चित्रशब्दतिरस्कारेण।

सर्वथा रूपकादावारोपादयः सर्व एवैते विशेषाः पदार्थसार्थसंसर्ग-मर्यादामात्रभास्याः, न तु वाच्यवृत्त्या। तदित्थं पराहतैव वराकी वाच्यत्ववाचोयुक्तिरलङ्कारपदवाच्यानामुपमादिविच्छित्तीनामपि॥ ४०॥

अस्ति चालङ्कारस्य द्विदलन्यायेन द्विशरीरत्वम्। तत्रैकमेषा स्थूल शरीर रूपणादिस्वरूपम्, अन्यच्च तत्प्राणभूतम् अतिशयरूपम्। यदुच्यते–

सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्या कविना कार्यः कोऽलकारोऽनया विने–। ति॥

भामहादारभ्यानन्दवर्धनमम्मटप्रभृतीन् यावत्[2]। अतिशयश्चासौ चमत्कारैकरूप', चमत्कारहेतुरूपो वा। स च सर्वत्रापि गम्य एव। इत्थ चास्पृष्टमेवालङ्काराणामतिशयरूप शरीर वाच्यवृत्त्या, सूक्ष्मशरीरमिव चाक्षुषप्रत्यक्षवृत्त्या। यश्चासौ चमत्कारस्वरूप आनन्दसप्लवः सौन्दर्य-

---

१. 'प्रधानगुणभावाभ्या व्यङ्ग्यस्यैव व्यवस्थिते। काव्ये उभे ततोऽन्यद् यत् तच्चित्रमभिधीयते॥' इति॥ ध्वन्यालोक–३।४१–वृत्तौ 'चित्रम्, न तन्मुख्य काव्यम्। काव्यानुकारो ह्यसौ' इति। अत एव विश्वनाथेनापि चित्रनामा भेद एष न ह्यङ्गीकृतः। एतच्च सर्वमप्यस्माभिरात्मन 'आनन्दवर्धन'–नाम्नि ग्रन्थे वितत्य प्रतिपादितम्।

२. a. भामहस्य काव्यालकारे २ ८५।
b. ध्वन्यालोकस्य ३.३६ वृत्ति.।
c. काव्यप्रकाशस्य दशम उल्लासे विशेषालकारवृत्त्यन्ते।

तज्जनकानां तत्त्वानां का नाम तत्र कल्पनापि वाच्यतायाः। स एष इक्षु-क्षीर-गुडादीनामपि वचसा स्प्रष्टुं न क्षमः, किं पुनर् लोकोत्तर-कला-साम्राज्याधिपतेः काव्यस्य ॥४१॥

निगमः—

**काव्ये सर्वेऽप्यलंकारा वाक्यार्थविधया विदाम् ।**
**सम्वित्कुटीशुकायन्ते न लभन्ते च वाच्यताम् ॥४२॥**

42 Consequently all the Alaṁkāras are only parrots of reader's intellect and can never be called as expressed. They are as unexpressed as the meaning of a sentence, relation of syntactical meanings

स्थितमेव यद् द्विविधोऽप्ययमलङ्कारपदवाच्योऽलम्भावोऽनुभवैकगम्यः, न तु शब्दवाच्य इति। अय त्वत्र विशेषो यद् रसादौ रसादिशब्द-प्रयोगोऽकिंचित्करो दोषभूतो वा, उपमादिषु पुनरिवादिशब्दोऽपि साहायक-मेवाचरत्यलङ्कारस्य स्थूलशरीरस्पष्टतायामिति। तदयमत्र सग्रहः—

सम्बन्धोऽपि पदार्थानां चमत्कृत्येकतत्परः ।
अलङ्कारतया काव्ये प्राचीनैरभिलप्यते ॥ २१ ॥
तस्याप्यस्य द्विशाखत्व कदलीस्तम्भगर्भवत् ।
यस्मादतिशयोऽप्यस्य रूप तत् तस्य गर्भगम् ॥ २२ ॥
योऽसावतिशयोऽसौ हि चमत्कारस्य कारणम् ।
अन्यथा तूपमानादिप्रमाण स्यादलङ्कृतिः ॥ २३ ॥
चमत्कारस्तु यस्तेषां स रसो भोग्य एव स. ।
वाच्यवृत्तिस्तु तं स्प्रष्टुं भवेत् स्वप्नेऽपि न क्षमा ॥ २४ ॥ इति

प्रसाधितमेव सौन्दर्यरूपस्य तदुपपादकोपमादिविच्छित्तिरूपस्य चाल-भावापरपर्यायस्यालङ्कारस्यास्पृष्टवाच्यवृत्तिकत्वम् ॥ ४२ ॥

ननु "रमणीयार्थप्रतिपादकः शब्दः, शब्दः अर्थश्चेत्युभावपि समशीर्षिकया वा गुणालङ्कारादिवैशिष्ट्येन काव्यमिति प्राचा प्रायोवादः। ततश्च 'अलकृतार्थविज्ञानस्य' काव्यत्व प्रस्थापयता भवता पक्षे का नु वाचोयुक्तिरि–ति प्रश्ने तामेवोपतिष्ठापयिषन्तो भूमिकामाबध्नीम·—

द्वैरूप्यं वस्तुमात्रस्य दृश्यते व्यवहारिभिः।
बाह्यत्वेन स्थितस्यास्य ज्ञानत्वेन स्थितस्य च ॥४३॥
काव्यं ज्ञानैकरूपं हि बाह्यत्वं तत्र न क्षमम्।
प्रतिभा ज्ञानरूपा यत् काव्यत्वेन प्रकाशते ॥४४॥

**Argument in support of the subjetivity of poetry :**

43. Every thing has its twofold nature—objective and subjective. And it is an open fact for all.

44. Poetry holds only one nature and that is subjective It can never be said as objective, since it is only pratibhā or intuition which takes the form of poetry and intuition is invariably subjective.

बाह्यत्वमत्र ज्ञानविषयत्वमपि। ततश्च चेतोबहिर्भूतानामिवामूर्तानामपि पदार्थाना काव्ये सग्रहः। क्षमम् युक्तम्। तत्र 'काव्य ज्ञानैकरूपमि'ति प्रतिज्ञा, 'बाह्यत्व तत्र न क्षमम्' इति प्रतिपक्षनिरास। उभयत्र चात्र हेतुः 'प्रतिभे'–त्यादि। उक्त च 'उपादान निमित्तमि'–त्यादिना पूर्वमपि। तत्र प्रज्ञा हि ज्ञानरूपा। प्रज्ञाया प्रतिभासरूपा या प्रतिभा सापि न न ज्ञानरूपा, ततश्च प्रतिभायामुदितं काव्यमपि ज्ञानस्वरूपमेव, न तद्बाह्यम् ॥ ४३-४४ ॥

## शब्दस्याकाव्यत्वम् काव्ये

ननु काव्यस्य ज्ञानविशेषरूपत्वे तत्र शब्दस्य महत्त्व स्वरूप च किमिति प्रश्ने ब्रूमः, उपाधिरूपो हि शब्दः काव्ये, प्रतिबिम्बग्राहकतया आदर्श इव बिम्बे। स्वरूप चास्य ज्ञानमेव, ध्वनिरूपस्य तस्य काव्यानुवादे मौनिनानुशील्यमाने मौनिकाव्ये च व्यभिचारस्य दर्शनात्। एतत् सर्वमभ्यन्तरीकृत्य ब्रूमः—

उच्चार्यमाणताधर्मी शब्दो बाह्यो हि सर्वथा।
तथाप्यर्थं विना काव्यभावं नासौ प्रपद्यते ॥४५॥
अर्थश्च शब्दसंकेतलभ्यः काव्येऽपि दृश्यते।
संकेतश्चाप्यसौ ग्रन्थिरूपः शब्दार्थ-बोधयोः ॥ ४६ ॥
संकेतोऽपि ततो बोधरूप एवावतिष्ठते।
सम्बन्धो ज्ञानयोर्ज्ञानभिन्नः किं नूपपद्यताम् ॥ ४७ ॥
शब्दः स्वबोधे संक्रान्तो बोधः संकेतके निजे।
संकेतश्च प्रबुद्धः सन् बोधमर्थस्य चुम्बति ॥ ४८ ॥
अर्थबोधोऽर्थ-बोधानामन्येषां संततिं सृजन्।
चमत्कारामृतं प्रोक्ष्य रसिके याति काव्यताम् ॥ ४९ ॥

**In poetry word is also subjective :**

45. The word is but an utterance, hence it ( word ) is always objective. It can never be called an attribute to 'Poetry' if it keeps aside its meaning And—

46. The m·aning touches reader's mind through its relation with word in poetry too [ as in other compositions ] This relation is merely a knot between two knowledges–the knowledge of words and the knowledge of their meanings.

47. Consequently the relation [ between the two knowledges ] too is subjective How can any thing be accepted as objective that lies in the knowledge which is always subjective

48. Thus, word enters into its knowledge, the knowledge enters into its relation, the relation, being awakened embraces the knowledge of meaning and,

49. The knowledge of meaning puts forth a chain of knowledges of other meanings and, having showered the nectar of charm, transforms itself into poetry in the full-hearted reader

उक्त च काव्यप्रकाशे श्रीमम्मटेन 'व्यड्ग्यमर्थ प्रति शब्दस्य प्रकाशकत्वात् न कारकत्वम्, ज्ञापकत्व त्वज्ञातस्य कथम्, ज्ञातत्व च सकेतेनैव'[1] इति, 'सकेतसहाय एव शब्दोऽर्थविशेष प्रतिपादयतीति यस्य यत्राव्यवधानेन सकेतो गृह्यते स तस्य वाचक' [2]इति च। सकेतश्च 'अस्माच्छब्दादयमर्थो बोद्धव्यः,' 'अय शब्द एतदर्थबोधको भवतु', 'असावर्थ एतच्छब्दबोध्यो भवत्वि'-ति सर्वथा मानसो ग्रन्थिबन्ध एव शब्दज्ञानार्थज्ञानयोः। तस्मादकिञ्चित्कर एव शब्द. स्वरूपतोऽर्थप्रतिपादने। एतदप्युक्त मम्मटेनैव 'इह अगृहीतसकेताद् शब्दादर्थप्रतीतेरभाव'[3] इति। एव यो हि सकेत. स ज्ञानरूप एव। तस्मिश्च शब्दः अर्थश्चेत्युभावपि विषयितया विशेषणीभूतौ। ततश्च विषयित्वसम्बन्धेन गर्भीकृतशब्दोपयिक-विशिष्टार्थप्रत्यय एव काव्यमिति सर्वजनीनमेव ॥ ४५-४९ ॥

१. काव्यप्रकाशस्य "नैमित्तिकानुसारेणे"-ति पक्षस्य वृत्तिः पञ्चमोल्लासारम्भ एव।

२-३. काव्यप्रकाशस्यैव द्वितीयस्योल्लासस्य 'साक्षात्सकेतित योऽर्थमभिधत्ते स वाचक' इत्यस्य सूत्रस्य वृत्ति।

निगमः—

एवं शब्दो बहिर्बाह्यः सन्नपि ज्ञा-रूपताम् ।
धृत्वोपाधिर्भवेत् काव्ये ज्ञानरूपे, न रूपतः ॥५०॥
अतीतकवि-काव्यानां शब्दाः स्युः कथमन्यथा ।
स्व-स्व-लिप्यादि-सम्वादाद्य-श्वः काव्यतां गताः ॥५१॥
मूकानां वाग्यतानां वा कवीनां काव्यवेधसाम् ।
कथं वा काव्यरत्नानि क्षरन्त्यद्यापि तन्मधु ॥५२॥

50. Thus, as we saw above, a word, though objective in the outer world, is absolutely subjective when it sticks to poetry, which is but knowledge and hence subjective only. This way no objectiveness of word is admissible in the field of poetry.

51. The words of ancient-most poets are availale even today through the medium of their scripts and other means They could not have been available to us had they been objective. No objective means of ancient days can become a poetic (or literary) property of today and tomorrow and the times to come.

52. And how the wonderful poetic treatises of dumb and taciturn (silent) poets are showering the same honey, even today ? [ objectivity was never their concern ]

उपाधिर्नत्ववयवः । रूपतः स्वरूपतः ॥ ५० ॥

अतीताना कवीना काव्यानि अद्यश्वोऽपि लभ्यन्ते एव । अति-

विचित्र चैतत्, आश्रयाभावेऽप्याश्रयिणो लाभात्। कथमिदमिति प्रश्ने च काव्यस्य ज्ञानमात्रत्वमेव शरण समाधये। ज्ञान हि लिप्यादिभिरभिव्यज्यते। तत्र आदिपदेन शब्दस्यापि सग्रह.। शक्यानुशीलन हि काव्यमन्तराप्युच्चारण लिपिसकेताभ्याम्। तत्रैव च मूकदृष्टान्त वाग्यतदृष्टान्तश्च। कविः सहृदयश्चेत्युभावपि वाग्यतौ। कवि काव्यमुपनिबध्नाति, सहृदयश्चानुशीलयति। नास्ति तत्र मध्ये वैखर्या. काप्यावश्यकता। उच्यते च दक्षिणामूर्तिध्याने—

चित्र वटतरोर्मूले शिष्या वृद्धा गुरुर्युवा।
गुरोस्तु मौन व्याख्यान शिष्याश्चच्छिन्नसशया.॥ इति।

किमिद मौनत्व व्याख्यानस्य। इदमेव यदभ्यासेन शुद्धनाडिकाचक्रस्य उद्भासितवार्धकस्य च गुरो स्वयमेव व्याख्यानत्वम्। वृद्धाना चातथात्व शिष्याणाम्। अत्र अर्थज्ञानमेव परमोऽर्थ·। स च नास्ति शब्दसापेक्ष। फलदर्शनेनैव तस्य लाभात्। अत्र गवि कियन्तु दुग्धमिति पृष्टे दुग्ध्वा दर्शिता दुग्धमात्रैव समर्थ सम्प्रत्यायक चोत्तरम्। काव्यस्यापीयमेव कथा। तदपि ज्ञानमात्रमेव। शब्दार्थरूपत्वे पुन· शब्दार्थयो कविभिरेव सह समाप्तत्वान्न ह्येव स्यात् प्राचीनाना कवीना काव्योपनिषदो लाभः साम्प्रतिकेषु। अन्यथा = ज्ञानरूपत्वमनादृत्य शब्दार्थमात्ररूपताया स्वीक्रियमाणायाम्। मधु रस क्षरन्ति प्रस्नुवन्ति ऊधासीव क्षीर गवाम्। तथा च श्रुतिः 'मधु क्षरन्ति सिन्धवः' इति। रसापेक्षया मधुशब्द. काव्येऽभ्यधिक युक्तः ॥ ५०–५२ ॥

## अभिहितान्वयान्विताभिधानवादौ

ननु वाक्य श्रुत्वा बालो व्युत्पद्यते, पदानि पदार्थांश्चावापोद्वापाभ्या धारयत इति यदुक्त तद्विपरीतमत्रोच्यत इति चेद्, अस्त्यन्य मार्गान्तरमपि, तच्चाभिहितान्वयनामकम्। ननु को न्वनयोर्भेद इति चेद् वाक्यशास्त्रिणा मीमासकानामयं विषयो न त्वालङ्कारिकाणामस्माकम्।

ननु काव्यमपि वाक्यार्थज्ञानात्मकमेवेति वाक्यमीमांसा भवतामपि न न स्वो विषयः। सन्ति च भवन्तो मीमांसाशास्त्रमेव काव्य-शास्त्रस्य मूलं ख्यापितवन्त आनन्दवर्धननाम्नि स्वकीये भाषामये ग्रन्थे[1] इति पृष्टे तूष्णीभावमाश्रयाणे भवति—

मुग्धः किं किमसभ्य एष भजते मात्सर्यमौनं नु किं
पृष्टो न प्रतिवक्ति यः किल जनस्तत्रेति सम्भाव्यते। इति—

महिमभट्टोक्तिं स्मरामः।

आ, जानीमहे। का गतिः? ददाति हि गोमयमपि गौस्तदर्थिने।

ननु ब्रूमहे श्रूयताम्, किन्त्ववधानेनापूर्वं एष उपन्यासोऽस्मदुपज्ञः। तत्र पूर्वम्—

अभिहितान्वयवादः

शब्दादर्थाय या यात्रा स एषोऽभिहितान्वयः।
कृत्स्नेऽपि वाङ्मये सोऽयं विद्यते विहितास्पदः ॥५३॥
अभ्यस्त-शब्दशास्त्राणां कोषज्ञानां सुमेधसाम्।
स्व-भाषा-वाङ्मये बुद्धिः पदार्थानां पुरः स्थिता ॥५४॥
वाक्यार्थबुद्धिस्तत्पश्चादेव जागर्त्ति तद्विदाम्।
तस्मादत्राभिधा पूर्वं जायते चान्वयः परम् ॥५५॥
तस्मादन्वर्थनाम्नासौ निघण्टैः सनिरुक्तकैः।
उच्यते पौरुषेयेऽध्वा वाङ्मयेऽभिहितान्वयः ॥५६॥

F. The two systems of expression.

**Abhihitānvaya**

First expression then relation.

53. **The** system—'first expression ( abhidhā ) **then**

---

1. 'आनन्दवर्धन'-नाम्नोऽस्माकं हिन्दीभाषाग्रन्थस्य पृ० ९-१०।

relation ( anvaya ) is a journey from word to meaning In literature, whatsoever, this is the only system which is applicable. Explaination—

54. In all the scholars wellversed in grammar and well acquainted in lexicons, as we feel, the knowledge of the word-meaning ( or the meaning of words ) arises first so far as their own language is concerned, and—

55. It is then that the syntactical meaning comes forth. Hence in this system expression ( abhidhā ) comes forst and the relation thereafter,

[ conclusion ]

56. This-is-why this system is named as 'Abhihitānvaya' by the lexicographers and the etymologists which is true to its letters. This is the only system which can be assumed as scientific one in the entire literature and not only in poetry

अभिहिताना गृहीतपूर्वयाऽभिधया बोधितानामर्थानामन्वयोऽभिहितान्वय.। अत्राभिधा पूर्वमुपैति पश्चाच्चान्वय।। सोऽयमभ्यस्तवाङ्मयानां सभ्यतमाना विपश्चितामध्वा, ये हि काव्यानि पठित्वा रस गृह्णते। आशुग्राह्यतया चैषोऽभिधान्वग्रयो. पौर्वापर्यक्रमोऽसलक्ष्यः। ततश्चात्रापि अन्विताभिधानधीः शक्यसमुत्सेधा, वैज्ञानिकस्त्वत्राभिहितान्वय·। सेय वाड्मयगता स्थितिः। तामिमा प्रत्यपदोपदाम ४५ कारिका-सन्दर्भेण।

अत्र 'उच्यते पौरुषेये'–इत्यत्रावग्रहोऽपि मध्ये शक्यप्रवेश.। तेनापौरुषेयस्य भगवतो वेदस्यापि संग्रहः। तत्रापि मीमासकैरभिहितान्वयस्यैव स्वीकारात्॥ ५३–५६॥

## Anvitābhibhāna

First relation then expression.

In the world, and not in literature, when we go ahead in picking up any language as an innocent one we start our journey from meaning to word When the speaker gets and gets off some new and old words respectivey, in his sentence we relate certain parts of their 'whole meaning' with the words taken and left out, as the case may be This way

The name of this system is also true to its letters such as that of the former one In this system relation comes first and expression ( abhidhā ) there-after only

अथ—

अन्विताभिधानवादः

अर्थाच्छब्दोन्मुखी यात्राऽऽवापोद्वापाश्रिता तु या ।
वाक्यात् पदेऽभिधां धत्ते लोके सैषान्विताभिधा ।।५७।।
वाङ्मयेऽप्यनुवादेषु दृश्यतेऽसावखण्डितात् ।
वाक्योच्चयात् पृथक्कृत्य पदे शक्तिं प्रतन्वती ।।५८।।

57. Journey [ of an innocent ] from meaning to words, based on the getting and getting off [ the words and meanings ] is Anvitābhidhāna first relation then expression Its only sphere is material world [and not literature] It sets exression (abhidhā) in words snatching them from the spoken sentences.

58, In literature too Anvitābhidhāna ( first relation then expression ) may be applied wherever any bunch of sentence is translated There the words are separated from sentence

and the expressions ( abhidhās ) are sattled there-in

अपरश्च अन्वितानां जातान्वयानामभिधानमभिधया प्रत्यायनं यत्र सोऽन्विताभिधानाख्यो मार्गः। अन्वयाभिधानमिति तु युक्ततरं वक्तुम्, न त्वन्विताभिधानम् इति। पदार्थानामन्वय एवात्राभिधीयते, न तु केवलाः पदार्था सामान्यावच्छादित-विशिष्टान्वय-सहितेष्वेवार्थेष्वावा-पोद्वापाभ्यां शक्तिग्रहस्यात्र मार्गे सिद्धान्तत्वेन स्वीकारात्। यदेव हि अन्वितपदार्थत्वं स एव हि पदार्थान्वयः। नास्ति तत्र भेदः, प्रकृत्यर्थे विशेषणीभूतस्यैव भावपदार्थत्वात् ॥ ५७ ॥

अयं च योऽध्वा सोऽपि न नानुभविक.। किन्तु प्रारम्भिक एषः, न पार्यन्तिकः। सभ्यतमस्य राष्ट्रस्य वाङ्मयमेव प्राणाः। न चाद्रियते मार्ग एष सम्यगभ्यस्तवाङ्मयैः सामाजिकैः। एवं हि लोकगतोऽयं मार्ग आरब्ध-व्याहार व्यवहार-परिशीलनानां बालानामेव नियत., न तु परि-चिततमवाङ्मयदेवतासर्वस्वानां सुमेधसाम्।

अन्विताभिधानमिदं कदाचिद् वाङ्मयेऽप्यादीयते यत्रानभ्यस्त-तद्भाषस्तद्भाषानुवादेऽनुवादान्तरमाश्रित्य व्यापिपर्त्ति। चीनादिभाषासु पुनरेष भूम्ना कृतपदः। चित्रमयी तत्र लिपि.। तत्रापि प्रतिवाक्यं तत्र स्वतन्त्रं चित्रम्, अवयन्ति च लब्धतत्संकेतास्ततो वाक्यमुन्नीय तस्माद् वाक्यादेवाखण्डादखण्डमेव वाक्यार्थम्। सापि वस्तुत आरम्भिक्येव स्थितिरध्येतॄणाम्, अत एव च प्रविरला एव तल्लिपिज्ञा., प्रतिचित्रं संकेतग्रहस्य भिन्नत्वात् ॥ ५८ ॥

अथ चानयोर्विषयभेदः

**शब्दादर्थाय धीयात्रा वाङ्मयेऽभिहितान्वयः।**
**लोके शब्दाय या चार्थात् यात्रा सैषान्विताभिधा ॥५९॥**

In nutshell—

59 In literature mind starts from words and proceeds towards their meanings This is *Abhihitānvaya* First expression

then relation. Just opposite to it the journey from meanings to the words in worldly affairs is the procedure termed *Anvitābhidhāna* . First relation then expression.

किं च

भवतु नाम बाह्ये लोके कीदृश्यपि स्थितिः। वाङ्मये हि लोके वयं स्थिता, विचारयामश्चास्यार्थपरिशीलनप्रक्रियाम् । तत्र लाघवमेवाद्रियामहे, न तु गौरवम्, अनुभूतिविरहितम् । वाङ्मये चाभिहितान्वय एवानुभविकः। 'अस्ति' इत्यारभ्य 'विन्ध्याटवी नाम' इति कादम्बरीगद्याटवी अभिहितान्वयेनैव क्रोडीक्रियेत, न त्वन्विताभिधानेन । तथाभूतस्य हनुमत्पुच्छायमानस्य गद्यनन्दनकाननस्याखण्डिततयावगन्तुमशक्यत्वात् । एवमेव पद्यकाव्येऽपि नान्यः पन्थाः, ऋते अभिहितान्वयम् । न हि कश्चित् 'कश्चित् कान्ताविरहे'-ति मेघदूतस्य प्रथमेऽपि पद्ये झटित्येव प्रभवेदर्थमवगन्तुम् । पद्य-द्वयानुबन्धनीयार्थकेऽस्मिन्[1] पद्ये का नु वार्तान्विताभिधानस्य, अन्वयानुभूतेः पूर्वमभावात् । तत्र पूर्वं प्रथमान्तानि विशेषणानि विशेष्यसापेक्षाणि तिष्ठन्ति, तृतीयान्तानि च तदनु । अनन्तरं चासकृत् कृते रोमन्थे, जाते च विशेष्यार्थलाभे घटतेतरामन्वयधीः । अत्र कीदृशो न्वन्विताभिधानवादः । अत एवोच्यते—

वाङ्मये या शब्दाद् अर्थाभिमुखी बुद्धियात्रा स अभिहितान्वयः, या च लोके अर्थात् शब्दोन्मुखा सविद्यात्रा सान्विताभिधानम् इति । का नु भवता स्थितिरिति भवन्तः स्वयमेव निश्चिनुयुः। कुम्भीधान्याः कुसूलधान्याश्च भवन्तोऽपि भवन्तः शिलमुञ्छमेव वा वाञ्छन्ति चेत् को नु प्रभवेत् भवतः प्रतिषेद्धुम् ॥ ५९ ॥

---

१. मेघदूतस्य प्रथमे पद्ये पूर्वार्धस्य योजना 'कश्चित् कान्ताविरहगुरुणा वर्षभोग्येण भर्तुः शापेनास्तङ्गमितमहिमा धर्मलोपागतेन' एवंविधा स्यादिति 'मेघदूतेऽभिव्यक्तिदोषा' लेखे सागरिकाया १०४ अङ्के प्रकाशितेऽस्माभिः सम्यक् प्रत्यपादि ।

द्वयो। समुच्चयस्य निरास ·

**समुच्चयोऽनयोर्वाक्य–पद–द्वितय-संश्रितः ।**
**विरुद्ध-युक्ति-वात्यायां शुष्कपत्रायजायते ॥६०॥**

60 The principle of accumulationism (samuccayavāda) of both these systems is merely a drier grass in the cyclone of opposite arguments, as it is based on the relativity bacause from the point of view of a sentence the system may be called as *Anvitābhidhāna* and the same may be called as *Abhihitānvaya* from the standpoint of words

वाक्यापेक्षयान्विताभिधानम्, पदापेक्षया त्वपर इति मुकुल-जयन्तभट्ट[१]-भोजराजादयः । तत्रैव च तेषा सिद्धान्तधी. । सा च न युक्ता । तत्र विरुद्धा युक्तय वाक्ये पदाना प्रातिभासिकत्वम्, अभिख्यानानिश्चयः, भाषाभ्याससम्पत्तौ तज्ज्ञेष्वन्विताभिधानस्याप्रसक्तत्व च ॥ ६० ॥

I For accumulation-ism see Mukulabhatta's Abhidhāvrttamātrkā [Kārikā-8] and ŚP stated in my book Sāhityasandarbhāh

II. Opposite arguments

(a) VP I 73-B, DH II 11

Really no words exist as separate entity as soon as a sentence has slapped one's mind.

(b) What would be the name of the system after this accumulation? Would it be called after the former one or after the latter? In either case the opposition would have to be faced

---

१ सहृत्यकारिता च समुच्चयश्चेत्यनर्थान्तरम् । ततश्च य एव जयन्त-भोजयो। सहृत्यकारितापक्ष। स एव मुकुलस्य समुच्चयपक्ष· ।

(c) After one's acquaintance with language it is only abhihiānvaya which is actually realized There, the question of remaining one does not arise

(d) Literature is a field of a reader expert in language and not of a beginner one and the system-first relation then expression is an exercise, scheduled for a blgininer alone [ K 60 ]

## अखण्डार्थवाद

**अखण्डार्थत्ववादस्तु वाक्यब्रह्म-विपश्चिताम् ।**
**यथाकथंचित् सोढव्य–धोरणी–पथिकायताम् ॥६१॥**

61. The syntactical meaning, the intactism or the indivisiblism accepted by the scholars, skilled in the truth of sentence may be regarded as tolerable upto some extent

एकमात्रवाक्याभ्यासे जागृयान्नामासावखण्डार्थवाद., प्रबन्धवाक्येषु तु तेषामन्योन्यभेदप्रसिद्धयेऽभ्यर्हितैव खण्डपरिकल्पना, अवयवभेद विना अवयविनो भेदस्याशक्यग्रहत्वात् । तदिदमुक्तम्-'यथाकथचिदि'-त्यादि ॥६१॥

I. If a new sentence does not possass any new word and complexity there-in, the reader will grasp the whole meaning of sentence as an undivided entity. But such cases are very rare The 'syntactical meaning' could not be accepted undivided, as the sentences, clubbed togather in any speech would invariably be separeted from each other Here the separation would not be possible if one does not accept the difference in their parts, words and their meanings.

II. The intactness means the quickness in the grasping so the entire meaning of a sentence. [ K, 61 ]

**काव्ये शब्दज्ञानस्योपाधित्वम्**

शब्द· काव्याऽवयवत्वेनाङ्गमभूत्वोपाधित्वेनैवाङ्ग भवतीति यदनुपदमेवोक्त तदेव कारिकयापि ब्रूम. –

**ज्ञानात्मकोऽपि शब्दः स्यादुपाधिः काव्यवर्त्मणि ।**
**पात्रं रसे पानकाख्ये दर्पणो वा तनौ यथा ॥६२॥**
**अनुप्रासादयश्चात्र पात्रे हैमत्वसन्निभाः ।**
**उपाधिमात्रधर्माः स्युर्न तूपाधिमतः स्वतः ॥६३॥**

**G Position of word in poetry**

62 Even in the form of concept or knowledge word can reach to the stage of only an attribute to a poetry, just as a pot to a drink, Pānaka or a mirror to a body.

63 Here the figures of words like alliteration stand like the golden-ness of the pot They are the qualities ( words ) of attribute only and not of which they are attributed to.

उक्तमेतद् यद् ज्ञानात्मक एव शब्दः काव्योपाधिरिति । तत्रैव दृष्टान्तद्वयम् । तत्र पानको रस· हिन्दीभाषाया 'पन्ना, पना आमका पन्ना" इति वा ख्यातो रस·, निर्माणप्रक्रिया चास्य शब्दकल्पद्रुमादिषु प्रसिद्धा । पानक–पात्रदृष्टान्तेन काव्य–तच्छब्दयोरत्यन्त वैसादृश्यं सिद्धम् । सादृश्यसाधनाय पुनर्दर्पणशरीरदृष्टान्तः । तत्र यथा दर्पण उपाधिरेव तथापि प्रतिबिम्बग्रहणेन बिम्बप्रतिबिम्बयोरैक्यभ्रमिमूल सादृश्यमप्युपस्थापयति तथैव शब्दोऽपि । यदुच्यते "गौरिति शब्दो गौरिति चार्थं" इति[1] । एतदेव च मूल वाक्यार्थप्रातिभत्वप्रकरणे प्रपञ्चिततमस्य विवर्तवादस्य । दास्येते च शरीरात्म-शब्दलिपिदृष्टान्तावपि ॥ ६२ ॥

ननु "यदि शब्दो न काव्यम्, अपि तु उपाधिः, तदपि ज्ञानत्वेन न

---

१. तथा च श्रुतावपि 'स भूरिति व्याहरत् भुवमसृजत्' इत्यादीनि वचनानि ।

स्वरूपत·, तर्हि का नु गतिरनुप्रासादीना शब्दालकारत्वेन सभाजितानाम्" इति प्रश्ने ब्रूमहे–"अनुप्रासादाय" इत्यादि। यथा हि पानकस्य पात्र हेममय भवति, तत्र भवत्येव मृण्मयात् पात्राद् वैलक्षण्यम्, तथैव शब्दोऽपि यदि सानुप्रासयमकादिस्तर्हि तत्रापि भवत्येव तत्। तच्चोपाधिमात्रगतम्, न तु उपाधिमतः काव्यस्य धर्मतया तन्नेयम्। दर्पणोऽपि विविधविग्रहो भवति। कश्चन कान्त्यतिशयी, मलिनश्च कश्चित्। प्रथमेऽपि कश्चिद् विस्फार्य प्रत्यायक·, कश्चिच्च यथातथम्। तत्राप्यानुभविक एव भेद·, चमत्कारश्च।

ननु "उपाधिरेष नित्योऽनित्यो वा। नास्त्यनित्य· शब्दानुवेधेनैवार्थप्रत्ययस्यानुभवात्। यदुच्यते–"अनुविद्धमिव ज्ञान सर्व शब्देन भासत' इति[1]। नित्यत्वे का नु हानि शब्दस्य तज्ज्ञानस्यैव वा काव्यत्वेन स्वीकृतो" इति चेद् वक्ष्याम एव स्वयम् "आत्मा देहस्य भेदेऽपी'-त्यादि। अत्र पुनरेतदेवोक्त्वा विरमामो यत् स्फाटिके निशान्ते सत्यपि नित्येऽपि प्रतिबिम्बे नास्ति निशान्त–नायक[2]–योरभेदलेशोऽपि, नास्ति च सत्यपि जलाशयादिषु सुधाशुप्रभृतीना प्रतिबिम्बस्य नित्यत्वेऽपि तै. सह प्रतिबिम्बितस्याभेदलेश·। एवमेवात्रापि गृहाण। स्वभावमात्रमिद न तु वस्तुधर्मः॥ ६३॥

एतदेव उपस्कुर्वीमहे–

सौरभेय्या यथा दुग्ध स्वर्णपात्रे महीयते।
तदेव सीसपात्रे तु नैव पुष्यति ता श्रियम्॥२५॥→

---

१ शब्दाद्वैतनाम्ना प्रसिद्धमिद भर्तृहरिकारिकासु भोजस्य शृङ्गारप्रकाशे च। एतच्च सर्वमस्माक 'साहित्यसन्दर्भगते भोजस्य ध्वनिविचारे' वितत्योद्धृतमिति नात्र पल्लवयामहे, मुद्रणयुगे पौनरुक्त्यस्याब्रह्मण्यत्वात्।

२ निशान्तो नाम नायकयो. शयनगृहम्। स्फटिकादिप्रतिबिम्बग्राहि-वस्तुनिर्मिते नित्य एव प्रतिबिम्बग्रह., आगरादुर्गे यवनशासकनिर्मिते काच-ज टित-स्न नागारे यथा।

एव हि [1]वर्णवक्रोक्तिशोभिते शोभते यथा।
तथा न शोभते काव्य तद्भिन्ने शब्दबन्धने ॥ २६ ॥
यथा पात्र च दुग्ध च भिन्नभिन्ने हि सर्वथा।
तथा शब्दश्च काव्य च, कान्वभिन्नात्मतैतयो. ॥२७॥
यथा पात्रस्य भेदेऽपि दुग्धभेदः ख-पुष्पति।
तथा शब्दस्य भेदेऽपि काव्यभेदोऽश्मवृक्षति[2] ॥२८॥
वेशन्त-दर्पणादीना भेदे सौधाकर वपुः।
प्रतिबिम्बश्रियो भेद सृजत्यपि न भिद्यते ॥२९॥
प्रतिबिम्बात्मके शब्दज्ञाने भेद सृजन्नपि।
अनूवादेषु शब्दस्य भेद. काव्य न भेदयेत् ॥३०॥
यच्च शब्देषु पद्यत्व सा सगीतकला प्रिया।
कला कलान्तरे यस्मादलङ्कारत्वमश्नुते ॥३१॥
नृत्य काव्य च गीत च वाद्य चाभिनये यथा।
रसे रसान्तर यद्वा दृष्टान्तोऽत्र महन्मतः ॥३२॥
अत एव च वृत्तस्य शब्दालङ्कारता जगौ।
इदप्रथमतो व्यक्तिविवेके महिमा महान् ॥३३॥
अकाव्यमपि तस्माच्च वृत्त-बन्धेन निर्मितम्।
उत्पादयति काव्यत्वभ्रम कोषादि-वाङ्मुखे ॥३४॥
गद्यबन्धेऽपि सगीत–कला–स्पर्शो न हीयते।
शब्दो नादात् पृथङ् नास्ति नादश्चापि स्वराद् यतः ॥३५॥→

१. वर्णवक्रोक्तिरनुप्रास इति कुन्तक ।

२. खम् आकाशम्, तत्र पुष्पम् अभावात्मकमेव, ततः खपुष्पति अभावायते। एवमेव अश्मनि पाषाणे वृक्षः अश्मवृक्ष । यथा हि पाषाणे वृक्षो न रोहति तथैव शब्द भेदे काव्यभेदोऽपीति भाव । उभयथापि शब्दभेदे सत्यपि काव्यस्य भेदो न भवतीत्येव प्रतिपिपादयिषितम् ।

अनूवादेषु सगीत–मात्र–भेदोऽनुभूयते।
अर्थबन्ध–स्वरूप तु काव्य तत्रानुवर्त्तते ॥३६॥
अत एव च तत्रास्ति प्रत्यभिज्ञापि मानसी।
एषोऽनुवादो मेघस्य न माघस्येति पाठके ॥३७॥
अत एव च वक्ष्यामः वैखर्यमिपो'-ति कारिकया स्वयमेव ॥५३–५४॥

I Pānaka rasa preparation of raw-mangofruit, boiled or parched, bruished in water and mixed up with some quantity of salt, chilli, saffron, sugar and some dry fruits It is called pannā or panā in Hindi.

II Though pot is essential for any liquid drink, however, it can never be accepted as drink itself even if made of gold Likewise no mirror can be accepted as body reflected there-in So is the case of word-knowledge in poetry. That is but outer one and does not enter into the body of poetry as its part or limb.

III The milk of a healthy cow does not achieve its glory in a leaden pot as much, as in a golden one. Poetry too never attains the same auspicious-ness in other compositions as in the adequate or oramented ones.

As the pot and the milk put therein can never be treated as identical so is the position of the words= utterances, their knowledge and the poetry shadowed and adopted there-in

Milk remains unchanged even if the pot is changed. On the same lines 'any sort of change in words bring-no change in poetry'

Lakes and mirrors may be varied but the graceful globe of moon reflecled therein, maintaining its

brilliance with a little difference due to adoptives or receptives survives unvaried

The knowledge of words (and not the words) works as an adoptive and that is only changed when the words are changed in translations Even then poetry maintains its original form without even a bit of change

where-in poetry is couched in verse one additional art, music, is added to it The civilized world knows that one art becomes an ornament for another one, such as dance, poetry, vocal music and instrumental music in the art of staging We may take good opportunity to make the point clear with help of the theory of Ānandavardhan's 'Rasālamkāra', where-in one rasa beautifies the other rasa [ DH II 5 ]

Therefore, one other great rhetorician, Mahimabhatta came forward with his theory—'Metre too is an alamkāra of poetry' [ VV chapter II Page 181, 235 in my edition ] It is, of course, a reality That is why even an ordinary statement creates illusion of poetry if versified like the samskrta lexicons and other versified topics

One would be aware of the fact that the music survives in prose too, since words can never be separated from the sound and all that is *svara* or musical tauch. In translations one may feel changes in this music only and not in poetry which is a composit form of particular meanings, which is maintained in all the translations This is why one realizes this is the translation of Meghadūta and not of Māgha, Śiśupālavadh' or 'this is the translation of Hamlet and not of other one'.

This way words and their peculiarities are the medium of communication only and not of the communicable poetry itself

ननु 'यदि काव्ये शब्दस्योपाधित्वमात्रम्, तदपि च ज्ञानरूपेण न तु स्वत, तर्हि कवि· सहृदये स्व काव्य कथ नु सक्रामयति, यत्रासौ लेखादिक मार्गान्तरमनादायोच्चारणात्मना शब्देनैव स्व काव्य प्रकाशयती'ति चेदिदमपि सत्यमेव, आनुभविकत्वात्, किन्तु उच्चार्यमाणेन शब्देन प्रकाशितेऽपि काव्ये न ह्येव प्रपद्यते काव्यभाव शब्दः। यथा—चैतत् तत् प्रतिपादयाम.—

कविः सहृद्ये येन स्वं काव्यं क्रामयत्यसौ।
उच्चारणात्मा शब्दोऽपि, किन्त्वेष तु पितामहः ॥ ६४ ॥

पिता तु काव्यपुत्रस्य शब्दज्ञानं हि विद्यते।
सुन्दरार्थ - समुल्लेख - स्वरूपस्य स्वभावतः ॥ ६५ ॥

पौत्रस्य राज्यलाभेन राज्यलाभः पितुर्यथा।
पितामहस्य चेत्येवं शब्दे काव्यमिति श्रुतिः ॥ ६६ ॥

64. Among the mediums [ like script, painting, etc. ] the word is also one medium through which poet transmits his poetry into the enjoyer. Word is nothing more than an utterance. But it ( word ) holds the position of grandfather only [ for poetry ]

65. So far as the father of son=poetry, which is by nature an appreciation of a charmful meaning, is concerned, it is only the knowledge of word.

66 As father and grandfather too are called king due to the kingdom of their son and grandson, likewise the term poetry is attributed to utterance too. [ word=grandfather, wordknowledge=father and poetry=son. ]

पितामह· कारणस्य कारणमिति भावः। अपि - शब्दाल्लिपेरपि संग्रह॰, उत्कीर्णनात्मनो लेखस्य च ॥ ६४ ॥

अत एव च नैयायिकाः 'पदज्ञानं तु करणमि'-ति । समुल्लेखश्चित्परामर्शः, सवित्तिरिति यावत् । सवित्तिश्च ज्ञानैकात्मा, ततश्च काव्यमप्यर्थ-ज्ञानात्मकमेव ॥ ६५ ॥

पौत्रस्य राज्यलाभे तस्य पितापि राजवद् आद्रियते, पितामहोऽपीति विदितचरमेव । तच्चेद सर्वमपि पारम्परिकमेव, न तु स्वारसिकम्, तथैव शब्दज्ञानस्य काव्योपाधित्वे शब्दस्यापि तत्त्व सुलभप्रख्यापनमेव। विवेकिनः पुनस्तत्र न मुह्यन्ति तत्त्वविचारे।

निरस्तमेव शब्दोच्चारणादप्यभिव्यज्यमाने काव्ये शब्दस्य काव्य-त्वम् ॥ ६६ ॥

ननु 'उक्त खलु तत्रभवता भगवता हरिणा 'अनुविद्धमिव ज्ञान सर्व शब्देन भासत'[1] इति, उच्यते च मीमासकै॰ 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध'[2] इति, आदीयते च तत· शब्दार्थयोरभेदवादः प्रेक्षावद्भि·। उपाधिवादे पुनः कथमेषा निर्वाह इति चेद् श्रूयताम्—

पदवाक्यविदां शब्दानुवेधाऽभेदयोः कथा ।
उपाधिमात्रतामेव शब्दस्यार्थे प्रसाधयेत् ॥६७॥
नो चेद् स्युर्व्योमयानेन गच्छन्तोऽपि हि पक्षिणः ।
विमानेन भवेत् तेषामभेदस्तदुपाधिना ॥६८॥

Other theories ond their appreciation ·

67-68. Grammarians and the scholars of syntactical meanings like Bhartrhari say 'every concept is (a pearl which is) pierced with word (needle) and 'word and meanings are just identical ones'. In my opinion in both the cases

१. वाक्यपदीये १.१२३ कारिका। २. मीमांसादर्शने १.१.५ सूत्रम्।

word does not go beyond the attributeness [upādhitva] to its meaning

Other-wise all the air-travellers would be identical with birds because [ the above schools of grammarians and mīmāmsakas ] will have to consider them and their attributes i e. Aeroplans identical.

पदविदो वैयाकरणा भर्तृहरिप्रमुखाः। वाक्यविदश्च मीमासका जैमिनिप्रमुखा। तत्रानुवेधपक्षो वैयाकरणशिरोमणीना तत्रभवता भर्तृहरीणाम्, अभेदपक्षश्च जैमिनिचरणानाम्। यथा चैतत् तद् अनुपदमेवोद्धृताभ्यामेतेषा वाक्याभ्या स्पष्टमेव। उभयत्राप्यत्र प्रथमे पक्षे उपाधिवादोऽव्याहृत., परत्र च कवितामात्रता पश्यामः न तु तत्त्वाभिनिवेशम्। अत एवानन्दवर्धनोऽपि 'औत्पत्तिकस्तु' इति शब्दं परित्यज्य 'औपाधिकस्तु' इति शब्दमादत्त[1]।

ननु 'वाच्यवाचकभावाख्ये सम्बन्धे' 'औत्पत्तिकत्वमे'-वानन्दवर्धनस्यापि मतम्, औपाधिकत्वं च व्यञ्जनामात्रविषयतया तत्र व्यवस्थितमिति चेत्, औत्पत्तिकशब्दस्यापि शबरस्वामिवदेव लोचनकृतापि नित्यत्वपरतया नीतत्वान्नानुपपत्ति.। नित्यत्व चेदमेव यद् यदैव अर्थ उत्पद्यते तदैव जातिवदेव तेन शब्दोऽपि संसजते। न हि तेनाभेदस्य सम्भवः।

कि च स्यान्नाम वैदिकानामेतेषा शब्दार्थयोरभेदः, आलङ्कारिकाणां त्वस्माक स निरर्थक एव। अर्थान्तरं हि काव्यस्य सर्वस्वम्। तच्चौपाधिकेनैव क्रमेण काव्यशब्दादानीयेत, न तु नित्याख्येनौत्पत्तिकेन मीमासकाभिमतेन।

---

१. ध्वन्यालोकस्य १९९७ वि० सवत्सरीये संस्करणे ४३६-४३८ पृष्ठानि। तत्रैव लोचनममपि-'जन्मना द्वितीयो भावविकार सत्तारूपः सामीप्याल्लक्ष्यते, विपरीतलक्षणातो वानुत्पत्तिः, रूढ्या वा औत्पत्तिकशब्दो नित्यपर्यायः, तेन नित्यं शब्दार्थयोः सम्बन्धमिच्छति जैमिनेय.।' इति। अत्र बालप्रिया 'जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यती-ति षड्विकाराः'।

एव ह्युपाधिरेव शब्दः काव्ये ज्ञानात्मनापि, न तु स्वरूपम् । अर्थे शब्दस्योपाधिमात्रतामिति अन्वय· ॥ ६७ ॥

अत्रैव दृष्टान्तो विमानयात्रिणाम् । ये हि विमानेनोड्डयन्ते तेषु विमान नित्य एवोपाधि· । यदि च विमानेनैषामभेद उद्दिश्येत तर्हि स्यान्नामैतेषा प्रधानमन्त्रिप्रभृतीना पक्षित्वमेव । उड्डयनसाधन हि पक्ष. । तच्च वर्त्तत एव तेष्विति तेषामपि पक्षित्वमनिवार्यप्रसरम् । सन्ति च तेऽपि मनुष्या एव, न पक्षिण ।

एव सूपपन्न शब्दज्ञानस्यापि काव्य उपाधिमात्रत्वम्, वदत्स्वपि पदवाक्यवित्स्वभिन्नत्व नित्यानुसक्ति वा तयोः । तदुपाधि· तेषा विमानेन गच्छतामुपाधिरिति भावः ॥ ६८ ॥

I VP I. 1, 123.

II ŚB I 1 5 and DH III gloss ( page 212 Km ) too go on the similar line while speaking of the eternity in relation of word and its meaning [ K 67–68 ]

पद-वाक्य-विदा शब्दानुवेधनित्यत्वाभेदपक्षावेव निराचिकीर्षमि —

**शब्दस्यार्थेन नित्यत्वेऽनुवेधस्य कृतं परैः ।**
**प्रमाणैस्तत्र सर्वत्र शब्द एव प्रमाणतु ॥६९॥**
**शब्दार्थयोरभेदे तु प्लुष्यतामग्निनाऽऽननम् ।**
**अतीतानागतत्वे च गगनस्यारविन्दताम् ॥७०॥**

Arguments

69 If the meaning remains pierced all the time with word then all the other pramāṇas would be proved useless, as the invariable word will be readily available of their stead.

70 In case word and meaning are identical and have no difference at all, then while uttering the word 'fire' mouth of speaker must have been burnt. So also nothing would

remain either of past or of future [ if word is visible for ears and its meaning has no difference therefrom, the meaning would also be visible either to ears only or to their own perceptives For further discussion see K.103-114.]

यदि सर्वत्रैवार्थेन सह शब्दस्यानुवेधः तर्हि, 'पर्वतो वह्निमान् धूमात्' इत्यत्र, 'गोसदृशो गवय' इत्यत्र, 'अय गौ', अहमिम पश्यामो'–त्यत्र च क्रमेणानुमानोपमानप्रत्यक्षेष्वपि शब्दप्रमाणत्वमेव स्वीक्रियेत, एष्वपि शब्दानुवेधस्यानुभूयमानत्वात् । आनुमानिको यथा परार्थानुमाने व्यक्तं शब्दमुच्चारयति, तथैव स्वार्थानुमानेऽपि, किन्तु अव्यक्तम् । सैव च गतिः प्रमाणान्तराणाम् । एव ह्यकिञ्चित्करमेव सर्वमिद शब्दानुवेधकथाजातम् ॥ ६९ ॥

वह्निना वह्निशब्दोच्चारणेनेति यावत् । अतीतेति । शब्दस्य प्रत्यक्षत्वे तदभिन्नत्वेनाभिमतानामर्थानामपि प्रत्यक्षत्वस्याकामेनाप्यभ्युपगतिप्रसक्तेः ॥ ७० ॥

[ ६४–तमया कारिकया ] शब्दोच्चारणेनापि काव्यमभिव्यज्यत इत्युक्तम् । तत्र विकल्पमपि पश्यामः । तथा च—

**किमुच्येत तदा किंच कृत्वा काव्यं यदा कविः ।**
**प्रकाशयति नान्येभ्यो न चोच्चारयते स्वयम् ॥७१॥**

Poetry and utterance.

71. Moreover what would be said at the time when a poet, after having composed his poetry, does not convey it to other and does not utter for himself as well ? →

यदुक्त भगवता व्यासेन महाभारते [ १।९।५५,६१ ] ब्रह्माणं प्रति

कृतं मयेद भगवन् काव्य परमपूजितम् ।
परं न लेखकः कश्चिदेतस्य भुवि वर्त्तते ॥ [ १।१।७० ] इति,

गोस्वामिना तुलसीदासेन

रचि महेस निज मानस राखा ।
पाइ सुसमअ सिवा सन भाखा ॥

[ भगवतो रामस्य चरित भगवता शङ्करेण विरचय्य पूर्वं मनस्येव निहितम्, पश्चादुचितमवसर लब्ध्वा शिवायै प्रकाशितम् ] इति,

सोमदेवेन च

इद गुरुगिरीन्द्रजा–प्रणय–मन्दरान्दोलनात्
पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् । इति ।

वचनैरेतैः प्रमाणितमेवाप्रकाशितत्वेऽपि मानसे विद्यमानत्वं काव्यस्य । मानसे च नास्त्येव शब्दः । उच्चार्यमाणस्यैव शब्दस्यात्र शब्दत्वेन ग्रहणात् । एतेन शब्दानुवेधादिपक्षेऽपि शब्दस्य वैखरीत्वे निराकृते ज्ञान-मात्रत्व स्थितम् । तस्य चाशब्दत्वमेव वक्ष्याम । अन्यद्धि ज्ञानम्, अन्यश्च शब्दः । विषयविषयिणोर्भेदस्य नैसर्गिकत्वात् ॥ ७१ ॥

For example

( a ) The Mahābhārata had already been composed in the mind of sage Vyāsa and he had been waiting for some scribe, as he himself urged to Brahmā [ MB. I. 1. 7, I 1 55 & 61 ].

( b ) The famous storeis of Kathāsaritsāgara were also hidden in the mind of Śiva and were uttered only when His dear Pārvatī insisted therefor. [ verse-1 of every Taranga of Kathāsa ]

( c ) Hindi writer sage Tulasīdāsa also says—'The Rāmacaritamānasa, after its composition, was

preserved in the mind of Śiva and was utterred before Pārvatī on a suitable occasion–'Raci Maheśa nija mānasa rākhā, pāi susama-a Sivā sana bhākhā. Thus the utterance and poetry have no invariability into their relation [ K. 71 ]

मानसत्वादुच्चारणविकल्पमेव तर्कान्तरेणापि समर्थयामहे—

**अभ्यासो मानसो यस्तु सूक्तानां तत्र कीदृशी ।**
**वैखरी यानि वक्तारो ब्रह्मोद्येष्वेव चक्षते ।७२॥**

**Other arguments**

A· Lack of utterance in poetry Vyabhicāra—

72. In the mental repetition of vedic hymns utterace does not have any room, where as in rituals the same hymns are recited loudly.

सूक्तानां वैदिकानाम्, तदुपलक्षितानां सूक्तीनामपि पौरुषेयीणाम् । सुभाषितशोभना हि सभ्याना वाक् । भवन्ति च तानि तेषा हृदयमात्रे स्थितानि । ब्रुवते च ते तानि कदाचिदेव सत्यवसरे । ततः पूर्वं कीदृशी तत्र वैखरी ? अभावेऽपि तस्याः सहृदयमानसे तेषामुपस्थितत्वात् । ब्रह्मोद्य वेदपारायणम् । तत्र यो हि भगवान् वेदः स तु पौरुषेयत्वाभावाद-सजातशब्दसरचनः भगवतः शिवस्य स्वयभूर्वाण इवाऽऽनुश्रविकत्वमात्र-सीमः, अतश्चोच्चारणात् पूर्वं न विगतसरचनत्वमेव काव्यस्य, श्रुतिषु व्यभिचारात् । तासा स्वरूपस्य सनातनत्वेन प्रवाहधर्मतया च सर्वत्रापि श्रोत्रियश्रेष्ठ ऐकरूप्येणैव लाभात् । तदेव व्यभिचरित वैखरीत्व काव्यस्य, तयोर्वैयधिकरण्यस्याऽऽनुभविकत्वात् ॥ ७२ ॥

1. We Brāhmaṇas never recite our secret mantra 'Gāyatrī' loudly. So also numerous verses of various languages are learnt by heart by civilized persons. Still we

do not find them reciting them all the times. These are recited only on suitable occasions Thus the poetry and the utterance or word or Vaikharī do not have invariability in their co-existence Hence the illusion of the identity of poetry and utterance is discarded absolutely and once for all

II. Abhyāsa · Learning by heart and repetition.

III Brahmodya The systematice recitation of the vedic hymns by Vaidikas divided into groups [ PS. 3 1 106, HC Page–7, line 5 and its comm of Śankara]. [K. 72]

बाह्याया अभिव्यक्तेः काव्येन व्यभिचारमुपन्यस्य, उपन्यस्य चाभिव्यक्तेरप्येकरूपत्वाभावं काव्यस्य वैखरीतः पार्थक्य सिषधयिषवो वैयधिकरण्यमुपस्थापयामहे कारणभेदं च—

**अर्थ-बन्धं हि यं शब्द-बन्धेष्वर्पयते कविः।**
**शाब्दिकेन, तमेवासौ कारुभिः प्रस्तरादिषु ॥ ७३ ॥**

B. Difference in substratum Vaiyadhikaraṇya—

73. For composing poetry a craftman may differ from a poet. A poet may have his mental composition of thoughts composed, in the different sets of words through the different persons skilld in the art of word composition

On the other hand he may have his same property ( mental composition of thoughts ) manifested in sculpture and other crafts too through other craftsmen [Hence]

शाब्दिकेन परिपक्व शब्दाभ्यासवता सुमेधसा, न तु केवलेन शब्दानुशासनमात्रविदा । दृश्यन्ते हि सम्यगभ्यस्त–व्याकरणग्रन्थपरिष्कारा अपि वाग्योगावसरे कीलितरसना उड्डीनपक्षिणः पञ्जरा इव शून्यसंस्कारा। शाब्दिकाः । तेऽपि न नोच्यन्ते वैयाकरणाः, मशाका

इव गरुडादिपक्षिगणनासु पक्षिणः, खद्योता इव वा सूर्यादिज्योतिर्गणनासु ज्योतिष्मन्तः। अर्थबन्धो हि काव्यमिति पूर्वमेवोक्तम्। स यत्र भासते स कविः। तमिममर्थबन्ध चमत्कारिण वार्थबन्धमसौ कारुभेदेन विविधैर्बन्धै॰ प्रकाशयति। तथा हि शब्दबन्धे शाब्दिकेन, मूर्त्तिबन्धे आश्मिकेन, चित्रबन्धे च चित्रकरेण। त इमे बन्धा विविधा॰। विविधाश्च तेषां कारवः। कवि, काव्य च तस्य एकरूपमेव। एव च स्थितमेतद् यद् उपाधय एव एते यत् प्रस्तरादय॰। प्रत्युद्गन्तार इमे भगवतः काव्य-ब्रह्मणः, आदर्शा इव बिम्बवर्ष्मणः। तथा च निरस्तैव शब्दस्यापि काव्य-रूपता, बिम्बरूपतेव दर्पणादेः, शिवादिरूपतेव वा प्रस्तरादे ॥ ७३ ॥

**चमत्कार्यर्थबन्धस्तु रामे, श्यामे च तत्कला।**
**उच्यतामत्र को नु स्यात् कविः, कारुश्च कः परः ॥७४॥**

74 Suppose the mental composition of charmful meanings i e. poetry lies in 'X' and its craft in 'Y' which one be said as poet and which one as craftsman ? [ No doubt both are totally different ] But—

यदि चमत्कार्यर्थबन्धो रामे, तत्कारुत्वं च श्यामे तत्र राम एव कविः, कविरेव च स॰, न तु कारुः। एवमेव श्याम एव कारुः, कारुरेव च सः, न कविः। एतेन स्थितमेतद् यत् कवित्व कारुत्व चेति अनियत-सामानाधिकरण्य वस्तुद्वयम् ॥ ७४ ॥

**कारुत्वं च कवित्वं च द्वयं दृष्ट्वैकसंगतम्।**
**भ्रान्ताः शिल्पे च कारौ च काव्य-तत्कर्तृतां प्रति ॥७५॥**

75. Critics, having often seen craftsmanship and poetastry synchronised and synthetised in one person, confuse to discriminate the two pairs—

(i) Crafts and poetic compositions as well as

(ii) crafts-man and poets.

इदं चात्र प्रायिक यद् य एव कवि स एव कारुरपीति। तत्र हि द्वयोरैक्यमिव प्रतीयते, भिन्नत्वं पुनर्वस्तुगतिकम्। स्थितमेव कवित्व-कारुत्व-वैयधिकरण्यमपि। ततश्च कारौ कवित्वबुद्धिरप्यनियतैव। एवं च कारोरेव कवित्वं पश्यन्तो न सूक्ष्मदृश। यथा चैतत् तद् अनुपदमेव दृष्टान्तेनापि विस्पष्टयिष्यते ॥ ७५ ॥

शाकुन्तलस्य षष्ठेऽङ्के 'कृष्णशार - मृगी'-रसः।
अचित्रितोऽपि दुष्यन्तचित्ते चित्रित एव हि ॥७६॥
तेन चित्रकरः कोऽपि भवेत्, तत्र कविस्तु नः।
दुष्यन्त एव दुर्वासः—शापमोक्ष—प्रसादवान् ॥७७॥

**Example from the poetic history**

76. In the sixth act of [ Kālidāsa's famous play ] Abhijñāna-sākuntalam there lies a verse-'Kārya saikata' etc It reveals a wouldbe painting of the hind which is itching her charmful left eye with the sharp point of the horn of her beloved, deer This painting is a 'rasa'-painting and has already been painted or composed in Dusyanta's mind, though not painted on any outer base

77. Hence who so ever may be the painter but the poet there-in is our Dusyanta only, whom the black shadow of Durvāsa's curse had already forbidden and who now possessed the mental excellence ( essential for poetry too to flash its constituents in poet's mind )

शाकुन्तलस्य षष्ठे अङ्के 'कार्या सैकतलीनहंसमिथुना' इत्यादिकं रसचित्रं निर्मित्सितम्। तत्र चित्रमेतदनिर्मितबाह्यबन्धतयैव स्थितम्, दुष्यन्तमानसमात्रेऽधिरूढत्वात्। अयमत्र विशेषो यद् दुष्यन्त एव चित्रमिदं पिपूरयिषति, तत्र कारुत्वं कवित्वं चेति द्वितयमप्येकसंगतं दृश्यते। सैव

च स्थिति अर्थबन्ध–शब्दबन्धयोः कालिदासादौ। दुर्वास·शाप-मोक्षोऽत्र प्रतिभोद्रेकस्य सकेत.। यदुक्त कालिदासेनैव 'छाया न मूर्च्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा' इति। प्रसाद एष सत्त्वोद्रेक एव षष्ठकारिकोक्तः। कृष्णशारमृगीद्वन्द्वात्मना दुष्यन्त आत्मनः शकुन्तलायाश्च व्यतिकरमत्र प्रतीकयितुमियेष। पस्पर्श च तेन सामाजिकाना रसिकाना वा चेतोधातु नितान्तमेव प्रविश्य.। सोय रसः रसचित्र वा यस्य दर्शनं स एव कवि.। स च दुष्यन्त एव। कारुत्व तत्र कुत्रापि संभवति, स्वयमेव नायके वा, तन्निदेशकरे वा। काव्यस्यापि सैव स्थिति। ॥ ७६-७७ ॥

I. Rasa-paintıng : The pleasant-most kind of paintıng which reveals rasa ın the enjoyer. Other kınds of paintings are Bhāva-paintıngs, and the paintings of the things as they exist ın the world

II For Durvāsa's curse see Śākuntala IV. 1

III. Prasāda · Sattvodreka [ K 6 ]

Śāpa : Just opposit to sattva

Moksa The plain ground of intellect to beget the sattvodreka.

Milkman=Craftman, Pot=Word and its craft, Milk=Poetry and Cow=intuition, thus runs the metapher. [ K 76-77 ]

कथान्तरमिदं यद्धि कवित्वं शिल्पिता-युतम्।
रुचये श्रीमतां भूम्ना पयो मधुयुतं यथा ॥७८॥

किन्तु क्षीरं च मधु च प्रातिस्विक-रसं स्थितम्।
भिन्नत्वेनैव योगस्तु गुणोत्कर्षे हि कारणम् ॥७९॥

The co-incidents

78. It is just incidental that poetastry sometimes, happens to be accompanied with craftsmanship, and then it becomes more attractive and blissful, like the milk mixed with hony, for a gracious enjoyer.

79. But both the things, milk and honey are different, as their tastes are their own and they are not identical The mixture proves the means in an enhancement only of both the independent qualities thereof.

[The mixture and the perfume caused thereby is termed as 'parabhāga' in saṁskṛta, Raghuvaṁśa V 79].

कवित्व–कारुत्वयोर्वैयधिकरण्यायैव दृष्टान्तरमपि पयोमधुनोः समिश्ररूप.। न हि यत्रैव पयस्तत्रैव अनेकरसं मधु तिष्ठतीति कस्याप्यनुभवः। पयो हि सुरभिषु, मधु च सुमनस्सु। भवति च सामानाधिकरण्यमप्यनयोः, एकस्मिन्नेव पात्रे द्वयोर्मिश्रणात्। किंतु प्रायिकमेवैतत्, न नियतम्। इद त्वन्यद् यदनयोर्मिश्रणमास्वादातिशय जनयति रञ्जयतितरा च रसिकानां चेतासि भूम्ना। गुणोत्कर्षो नाम परभागः, बहुविध–रसद्रव्यपरिमलभरसतत्त्व.॥ ७८-७९॥

Even being a poet one may or may not be a good craftsman With poet the craftsmanship is just like the capacity of singing which can never be claimed as essential for him ( poet ), though it elevates him in popularity in comparison to others Kālidāsa, Rājaśekhara and Ksemendra possess equal qualities both of poetastry and craftsmanship, whereas craftsmanship exceeds the poetastry in Śrīharsa and Jagannātha. Māgha's craftsmanship is well-equipped whereas that of Bhāravi is lacking upto some extent

**Two kinds of Expression**

Kārikā 80 earmarks the two kinds of expressions 'mental set up' and its 'objective oppearance'. The analogy of milk explains it fully Further–

क्षीरं क्षीरं हविर्धान्या आपीनेऽपि स्थितं यथा ।
काव्यं काव्यं कवेस्तद्वत् प्रतिभायामपि स्थितम् ॥८०॥
अभिव्यक्तौ तु दुग्धस्य हेतुर्गोपाल–दारकः ।
किमसौ धेनु–भावेन पूज्यते पामरैरपि ॥८१॥

80. As the milk is milk in very respect even lying in the udder of cow, likewise 'the poetry too' is poetry in its full respect even existing in the womb of poet's intuition only

81 The means in bringing out milk are milkmen Can the milkman be accepted as cow even by laymen ?

अभिव्यक्तिरपि द्विविधा मानसी, उच्चारणरूपा चेति । तत्र या मानसी सापि मान्यैव, न तु तत्र सन्देग्धव्यम् । कथमिति चेत् क्षीराभिव्यक्तिरिव । तथा हि क्षीर हि द्विविधं दुग्धमदुग्ध चेति । तत्र यद् दुग्ध तत्र नास्त्येव क्षीरत्वस्वीकृतौ विचिकित्सा । यत् त्वदुग्धं ततश्च गोरूधोमात्रे स्थितं तदपि न नास्ति क्षीरम् । अलाभ एव तैलस्य सिकताभ्य', तासु तस्याविद्यमानत्वात् । यत्र च विद्यमानत्व तेभ्यो न न भवति तल्लाभस्तिलेभ्यः । न च तिलेष्वव्यक्ततया स्थितमपि तैलमतैलतया सख्यावद्भिरुदीरयितुं शक्येत । काव्यमपीदमेवमेव कविप्रतिभायामपि स्थितत्वेनाव्यक्तत्वेऽपि न न भवति काव्यम् । हविर्धानी कामधेनु' । उक्तं चाभिनवैः महाकविवाचः कविप्रतिभायाश्च कामधेनुत्वम्,[1] राजशेखर-भट्टनायकाभ्या च[2] । एतेन कविताया महिमापि प्रतीतः ।

१. ध्वन्यालोकलोचने २।२७ कारिकान्ते लोचनमङ्गले च ।

२. या दुग्धापि न दुग्धेव कविदोग्धृभिरन्वहम् ।
सा सदा सन्निधत्ता नः सूक्तिधेनु. सरस्वती ॥
—इति काव्यमीमासासाया राजशेखर. ।

वाग् धेनुर्दुग्ध एत हि रस यद् बालतृष्णया ।
तेन नास्य सम' स स्याद् दुह्यते योगिभिर्हि य' ॥
—इति च १।६–कारिकाया ध्वन्यालोकलोचने भट्टनायकः । →

या चैषा कामधेनुलक्षणा कविप्रतिभा तस्यां निहितविरचनमपि काव्यं काव्यमेव, नाकाव्यम् । नास्ति च तत्र वैखरीध्वनिः, अस्ति च काव्यम् । ततः कौ त्वन्वयव्यतिरेकौ काव्येन सह वैखर्याः । गोपालदारकः दोग्धा । क्षीरमभिव्यञ्जयन्नपि नासौ क्षीरधानीत्वेनाङ्गीक्रियेत । तथैव च कारुरपि कवित्वे । अत्र रूपके गोपालदारकः कारुस्थानीयः, शब्दः पात्रस्थानीयः, दुग्धं काव्यस्थानीयम्, धेनुश्च कविप्रतिभास्थानीया । एवं च भूयोऽपि दृष्टान्तेनानेन कवेः कारोश्च भेदः स्फुटीकृतः, स्फुटीकृतश्च शब्दस्य काव्यस्य च । भूयोऽपि स्मारितमत्र 'सौरभेय्या' इत्यादिक ६३–कारिकोपस्करणम् ।। ८०–८१ ।।

कारोरेव कविं भेदयन्तो भूयोऽपि दृष्टान्तान्तरमारचयाम —

प्रतिबिम्बप्रभा यत्रानुहृतिः क्रियते परैः ।
शूद्रकेणेव भासस्य तत्र को नु कविर् भवेत् ।।८२।।
मेघदूतस्य पद्यानामर्थानादाय सूरिभिः ।
बहुधा प्रेषिता दूतास्तत्र मेघकविः कविः ।।८३।।

Originality and imitation

82 Who will be treated as poet when ones poetic composition is reproduced by other like an impression in a mirror. Just as Bhāsa's Daridra-cārudattam by Śūdraka ( in his Mrcchakatikam )

83 Various and numerous messengers have been sent by other craftsmen, mainly Jains, on the lines of the verses of [Kālidāsa's] Meghadūtam Amongst them 'Poet is only one', the producer of Megha [-dūtam, Kālidāsa]

---

→ स्वयमानन्दवर्धनोऽपि 'परस्वादानेच्छाविरतमनसो वस्तु सुकवेः
सरस्वत्येवैषा घटयति यथेष्ट भगवती' ।
—इति ध्वन्यालोकवृत्त्यन्ते तामिमा भगवती कामधेनुत्वेनैव स्मरति ।।

अत्र प्रतिबिम्बपदमालेख्यस्यापि उपलक्षणम्। तेन त्याज्ययोः द्वयोरपि सवादयोः परिहारः। प्रतिबिम्बतुल्ये हि सादृश्ये 'प्रतिबिम्बकल्पं काव्यवस्तु परिहर्तव्य सुमतिना, यतस्तदनन्यात्म तात्त्विकशरीरशून्यम्, आलेख्यप्रख्यमन्यसाम्य तु शरीरान्तरयुक्तमपि तुच्छात्मत्वेन त्यक्तव्यमेवेति ध्वनिकृतोपदिष्टेन वर्त्मना[1] आलेख्याकारसादृश्यवदेव त्याज्यता सिद्धान्तभूता। स्पष्ट चैतद् राजशेखरेण काव्यमीमासाया द्वादशे अध्याये— 'त्रिपथमर्थमध्यगीष्महि, यदुत अन्ययोनि', निह्नुतयोनिः, अयोनिश्च। तत्रान्ययोनिर्द्विधा प्रतिबिम्बकल्प आलेख्यप्रख्यश्च। तत्र

अर्थ. स एव सर्वो वाक्यान्तरविरचना पर यत्र।
तदपरमार्थविभेद काव्य प्रतिबिम्बकल्प स्यात्॥

कियतापि यत्र सस्कारकर्मणा वस्तु भिन्नवद् भाति।
तत् कथितमर्थचतुरैरालेख्यप्रख्यमिति काव्यमि॥–ति।

पथिभ्यामाभ्या गन्तारौ हि क्रमेण चुम्बकः कर्षकश्च कवी। तत्र

यश्चुम्बति परस्यार्थं वाक्येन स्वेन हारिणा।
स्तोकार्पितनवच्छाय चुम्बकः स कविर्मतः॥ इति चुम्बक.,
परवाक्यार्थमाकृष्य स्ववाचि विनिवेशयेत्।
समुल्लेखेन केनापि स स्मृतः कर्षकः कविः॥ इति च

कर्षकोऽपि तत्रैव राजशेखरेणैव लक्षितः। अत्रोदाहरणम् भासस्य चारुदत्तम्, शूद्रकस्य च मृच्छकटिकम्। दरिद्रचारुदत्त एव हि शूद्रककृतेर्मृच्छकटिकस्यात्मा। वैपरीत्येनापि वक्तु शक्यते यदुत मृच्छकटिकमेवात्मा, दरिद्रचारुदत्तमेव च तस्य सक्षेपः[2]। सर्वथा को न्वत्र कविरिति हि जिज्ञास्यते। आहर्ता वा कविः, द्रष्टा वा? नून द्रष्टैव। आहर्त्तरि

१. ध्वन्यालोक–४।१३ वृत्तौ।

२. भासस्यैवाहर्तृत्व शूद्रकस्यैव चोपजीव्यत्वमिति डा॰रसिकविहारिजोशिभिः प्रास्तावि। द्र॰ सागरिका–१२–४०।

पुनः कारुत्वमात्रस्य भेदः। यद्धि कारुत्व द्रष्टु· कवेः, तद्भिन्न तदाहर्तुः। कारुकर्म च किमाश्रितमत्र, अन्यत्र वैखर्या·, अन्यत्र चार्थभेदलेशात्। एव च भेदेऽपि वैखर्या् को नु भेदः काव्यस्य, एकदेशविकृतस्यानन्यत्वेनैव ग्रहणात्, न हि शृङ्गविकलो गौर्गर्दभत्वेन गण्यते, न वाश्वत्वेन। गौरेव सः। गोत्वजातेस्तत्राविकलत्वेन स्थिते·। अस्ति च सैव व्यवहारौपयिकी। यदुच्यते महद्भिः 'न हि गौः स्वरूपेण गौ·, नाप्यगौ·, गोत्वाभिसम्बन्धात् तु गौरि'–ति। एवगते द्रष्टुरेव कवित्वमस्माक हृदय स्पृशति, नाहर्तु·। सन्ति चाहर्तारोऽपि भूयास। तथाहि मेघदूतस्यैव समस्यापूर्तिकर्तारः पार्श्वाभ्युदयादिविधातारो जैनसूरयः। अस्ति कि तेषामपि मेघकवित्व-सदृशी गणना। तेऽाप ध्रियन्त इत्येव तत्र पर्याप्तम्॥ ८२-८३॥

I Sūri=Scholars and jain monks They and some others have produced Pārśvābhyudayam, Nemidūtam and other Dūtakāvyas or messenger poems. [ Delailed list may be consulted in the History of samskṛta literature by Kṛṣṇamācārī ].

II. For imitation or reproduction see DH IV 13 and KM. XIIth chapter.

III. Some scholars think that Daridra-cārudattam itsfelf is an abridgement of Mṛcchakaṭikam [ K 83

**तस्मात् काव्याय शब्दानां योजना बुद्धिगा तु या।**
**चमत्कारधना सापि काव्यत्वेनोपचर्यताम्॥८४॥**

The purport :

84. And thus the mental composition of words to communicate the poetry, may also be called poetry though secondarily, if it provides bliss

सेयं सर्वापि कथा कारुत्वमात्रगता। तत्रैव इह भेदः। तेनैव च कवितद्भिन्नयोरैक्यभ्रम.। कारुत्वेऽपि वैखरीमात्रमपरो भ्रमति भ्रान्तये। ततश्चोपाधित्वेनैवासौ नेया सुमतिभि', न तु काव्यत्वेनेति भूयोभूयः प्रमाणयामः। यच्च क्वचिच्छाब्दोऽपि चमत्कारः आकर्षति, सभाजयति च शाब्दिकानपि कवित्वेन, तत्रोदीरितमेवास्माभिः 'अनुप्रासादयस्तत्र पात्रे हैमत्वसन्निभा' इति। सोऽयमौपाधिकश्चमत्कारो नीलीकालीकृतं चिकुर-करम्बमिव विडम्बयति। छलायास्मै तूष्णीमेवास्स्महे। किन्तु न नात्रा-प्यवदध्महे यदत्रत्यापि शब्दयोजना बाह्यैक-कलेवरा भवति, तत्रापि कविसामाजिकान्यतरबुद्धिगतत्व तदुभयबुद्धिगतत्व चानुभवाम'। बुद्धिगत-त्वेन प्रातिभत्वस्यानिरासोऽपि स्फुटमवधेयः। तदुक्तम्–'उपचर्यतामि'ति। उपचारः साहचर्यमूला भक्ति, यथा देह आत्मशब्दस्य। एवमेव बौद्धाऽपि शब्दयोजना शब्दयोजनाबुद्धिर्वाऽकाव्यभूतापि उपाधित्वेन काव्यसाह-चर्यात् काव्यत्वेन पराग्दृष्टिभिर्व्यपदिश्यते। प्रत्यग्दृष्टयः पुनरत्र नीरक्षी-रीमाश्रयाणा न व्यामुह्यन्ति, प्रतिसन्दधति च भेदम्। प्रसाधितमेव वैखर्या अकवावपि विद्यमानत्वेन काव्यभ्रमिकृत्त्वम्, व्यभिचरितत्व च काव्यभावात्। ततश्च प्रतिभामात्रमेवात्र वाक्त्वेनापि ग्राह्यम् न तु बहिर्गत ध्वनिवितानम्॥ ८४॥

I. The word 'secondarily' reminds the reality that word, in its shape of utterance can never be claimed as poetry and in its shape of knowledge too it is nothing more than an attribute or some thing added to the poetry

II. Bliss is all the time essential for a composition to be called poetry.

III. For all these Kārikās=73–84 my gloss in samskrta may be consulted. [ K. 84 ]

[ ४३–तमकारिकातः ८४–तमा कारिकां यावद् ] यदिद वैखरी-शब्दस्य काव्यत्वं प्रत्याख्यातं तस्याय मतनिगर्व.—

काव्ये शब्दस्य देहस्तु नैव गृह्येत जात्वपि ।
तस्य ज्ञानं तु गृह्येत किन्तूपाधित्वमात्रतः ॥ ८५ ॥

अत्र हेतुः —

काव्यस्य ज्ञानरूपत्वे शब्दत्वं नोपपद्यते ।
शब्दस्य ज्ञानतायां च शब्दतैव विनश्यति ॥ ८६ ॥

The conclusion [ of Kārikā 43-84 ]

85 Accordingly in no case the objective word can enter the sphere of poetry The subjective one may somehow enter therein but that too as an attribute

86 Poetry is always sujective and hence it can not be a word which is always objective. If word is assumed subjective it no longer remains a word, rather its wordness ceases

शब्दस्य वैखरीरूपस्य । देहपदेनात्र शब्दस्य ध्वनिरूपतैव ग्राह्या, तदतिरिक्तस्य सविन्मयत्वेनाङ्गीकारात् । शब्दस्य द्रव्यत्व वा सम्भवति गुणत्वं वा सम्प्रदायभेदात् । तज्ज्ञानस्य च गुणमात्रत्वम् । ततश्च गुण-त्वेन समानत्वेऽपि भिन्न एव हि शब्दः, भिन्नञ्च ज्ञानम् । शब्दो विषयः, ज्ञान च विषयि । अस्ति चानयोर्जन्यजनकभावोऽपि । सति ज्ञाने शब्दो-त्पत्तेः, सति च शब्दे ज्ञानोत्पत्तेः प्रात्यक्षिकत्वात् ॥८५॥

ततश्च शब्दस्य शब्दरूपताया ज्ञानत्व न शक्यसम्भवम्, ज्ञानरूपताया च शब्दत्वम् ॥८६॥

तदयमत्र निगमः —

**उपाधिमात्रता काव्ये शब्दज्ञानस्य कथ्यताम् ।**
**प्रातिभत्वस्य साम्राज्यात् पौरुषे वाङ्मयाध्वनि ॥८७॥**

87. Therefore it should be proclaimed that it is the knowledge of word=utterance which may be called as attribute to the poetry It is so as the entire literature prepared by human-beings is absolutely intuitional or subjective

उभयथापि चोपाधित्वमेव तत्र, न तु, स्वरूपत्वम् । काव्यस्य चमत्कार्यर्थबन्धमात्ररूपताया असकृदुपदिष्टत्वात् ।

पौरुषे वाङ्मय इत्युक्त्या अपौरुषेयस्य वाङ्मयस्य स्थूलशब्दस्वरूपतायामपि नास्ति नः क्षतिः । सार्वपारिषद्या वयम् । नास्ति चास्मासु कीदृशोऽपि गलग्रहः । न वय राजनीत्यैव कबलीकृताः, न वा सम्प्रदायविशेषेणैव । वस्तुस्थितेरेवानुरोधेन प्रवर्तमानानामस्माकं को नु सगन्धः कश्च परः । यदि वा सर्वेऽपि सगन्धा एवास्माकम्, प्रकाशरूपे काव्ये सर्वस्याप्यात्मरूपतयैव स्थितेः, प्रकाशातिरिक्तस्य विश्वस्याप्रसिद्धेः, अप्रकाशस्य च त्रैकालिकससर्गाविच्छिन्नप्रतियोगिकत्वं स्वत एव प्रमाणितम्, [शिवाद्वैतिषु] प्रकाशमयात् शिवादतिरिक्तस्य कस्यापि वस्तुनोऽसत्त्वात् । यच्च सत् तत् प्रकाशरूपमेवेति कीदृशो नु कुत्र भेदः, कीदृशश्च केन सह कस्य कलहः । वक्ष्यामश्चैतदग्रेऽपि स्पष्टमेव । एवं समर्थितं वैखरीरूपस्य ध्वनेरकाव्यत्वम् । तदेव चोपस्कुर्वीमहि—

काव्यक्षेत्रे न शब्दस्य प्रवेशो ध्वनिरूपतः ।
भाषान्तरानुवादेषु ध्वनीनां परिवर्तनात् ॥ ३८ ॥
अ-ध्वनित्वे तु शब्दस्य स्यात् स्फोटत्वं ततश्च नः ।
को [1]ऽर्थोऽस्य निर्विशेषस्य काव्याकाव्योभयान्वयात् ॥ ३९ ॥
स्फोटेषु निर्विशेषेषु काव्योपाधित्वमिच्छते ।
स्फोटस्य चितिरूपत्वात् तद्वानप्यकविः कविः ॥ ४० ॥
यश्चासौ स्फोटनामास्ति भावः का तत्र शब्दता ।
ब्रह्म-स्वरूपस्यैतस्य 'शब्द'–शब्दाभिधा विना ॥ ४१ ॥→

१. अर्थो लाभः ।

सा चासौ व्यवहारेषु ध्वनिमात्रेऽनुभूयते ।
पारिभाषिकमेवेदं शब्दत्व ब्रह्मणस्तत: ।। ४२ ।।
काव्यस्य सर्वमान्यत्वाद् वेदमात्र–व्यवस्थया ।
व्यवहारविरोधस्तु नैव सेव्य: सुमेधसा ।। ४३ ।।
एव स्फोटस्य शब्दत्वं यथा शब्दस्य काव्यता ।
विभ्रमो भक्तिमात्रस्य साहचर्याश्रितस्य हि ।। ४४ ।।
व्यङ्ग्य-व्यञ्जकभावस्य वैपरीत्यमपि स्थितम् ।
ध्वनौ स्फोटे च ह्युर्युक्तावेव[1] व्यङ्ग्यो ध्वनिश्च यत् ।।४५।।
एतद् द्वितमयप्यत्र त्यक्त्वा तस्मात् सुमेधस: ।
चमत्कार्यर्थबन्धस्य काव्यत्व वीक्ष्य निर्वृता. ।। ४६ ।।
एषा विज्ञात-वेद्यानामजिह्मा राजपद्धति. ।
अत्र नास्ति विपर्यासो मायाया ब्रह्मणोऽपि वा ।। ४७ ।।
मायया ब्रह्मणस्तावद् दाम्पत्य वेधसाऽपि यत् ।
न साध्यते, कविप्रज्ञाकलया तत् प्रसाध्यत ।। ४८ ।।
—इति ।। ८७ ।।

I Moreover the word as Dhvanı=sound cannot enter the sphere of poetry as ıt ıs changed ın transtatıon. If ıt ıs Sphota then ıt ıs useless for us, sınce the Sphota ıs something common to both poetry and nonpoetry, because ıt has no specıalıtıes of words. Further ıt ıs accepted as soul. Now one who ıs not a peot wıll also claım to be poet due to hıs possessıon of soul, as soul

१. तथा चोच्यते लोचने "श्रोत्रशष्कुलीसन्तानेनागता अन्त्या: शब्दा: श्रूयन्ते इति प्रक्रियाया शब्दजा:, श्रूयमाणा इत्युक्तम् । तेषा घण्टानुरणनरूपत्व तावदस्ति । ते च ध्वनिशब्देनोक्ता । यथाह भगवान् भर्तृहरि —वाक्यपदीये

य. सयोगवियोगाभ्या करणैरुपजन्यते ।
स स्फोट शब्दजा शब्दा ध्वनयोऽन्यैरुदाहृता ।। इति [ १.१०२ ]

स्फोटस्य व्यङ्ग्यत्वेन सिद्धौ न ह्येव प्रमाणापेक्षा, तस्य प्रसिद्धतमत्वात् ।।

is a thing which is common to all the creatures and each of them would be accepted as poet

The Sphota of Bhartrhari ( and not of Nāgeśa ) cannot be called as word=utterance, as his sphota is Brahman and that is not an utterance=word. The term 'word' of our daily use is confined to utterance or sound only and therefore in the sense of Bhartrhari this term is only a technical term.

In the Vedas the word 'Vāc' may be said as Brahman but the poetry is not limited upto the vaidicas, Poetry pervades both vedic and non-vedic literature. Therefore, on account of the Vedas we cannot cut short the sphere of poetry and snatch it from others No wise man can allow such an impractical doctrine. Hence the proclaimatiom 'the sphota is word' and 'word is poetry' are absolutely illusive. And the illusion is caused by their invriable co-exitence.

The great grammarian Bhartrhari himself quoted the school belonging the doctrine 'Sphota is a means of flashing ( vyañjanā and not suggestion ) of Dhvani, just contrary to the current and famous school—'Dhvani is the means of flashing of sphota' [VP. I. 102 ] In poetry we leave both these schools aside and are satisfied with the concept—'the blissful composition of mental things is poetry' ( and the concept of word grasps it well ). Here no adversity takes place in the concepts of Māyā and so also of Brahman i.e. the Bhrahman ( Dhvani or sphota, whatsoever ) never identifies itself with Māyā ( sphota or Dhvani ) and the Māyā too does not have identity with Brahman

( whereas in the doctrine 'word too is poetry' this adversity comes forward ) At the same time—

The marriage of Māyā ( subjective word ) and Brahman ( subjective meanings i e Poetry ) which is impossible even for the Creator of this whole universe is easily and profoundly being performed by the art of the intuition, the intellect and the imagination of a poet

As word and meanings both are subjective and non-deviatable their marriage is not a difficult task Sudjectivity is knowledge and knowledge is Brahman. Meanwhile in the figure like Rūpaka or Atisayokti the super-imposition on, and the swallowing of the subject like face of or by the brilliant globe of moon is a craft only and it is all Māyā and it stands still charmful, whereas the charm is an non-deviative character of Brahman alone How Māyā could conceive it ? It is due to the poetic intuition, poetic imagination and poetic composition. Hence Poetry is but an art which lives only in the intellect [ K 87 ]

भाषान्तरानुवादेषु ध्वनीना परिवर्तनमुक्तम् । तदेव पल्लवयितुमुच्यते—

विनापि संस्कृतं मेघदूतं भाषान्तराऽध्वना ।
सर्वेषां स्वदते द्वीप-द्वीपान्तर-निवासिनाम् ॥ ८८ ॥

—निगद–व्याख्यातमिदम् ॥ ८८ ॥

Words with the originality and translation

88. [ Klidāsa's ] Meghadūtam leaving aside [ its original language ] samskrta [ remains of same taste and therefore ] has been enjoyed through the way of [ translations in ] other languages by the different inhabitants of this and that country.

तत्रैव हेत्वन्तरम्—

**अनुवादस्तु वैखर्या नैव सम्भवति क्वचित् ।**
**अनुनादस्तु तस्याः स्याद् बाल-वृद्ध-शुकादिषु ॥ ८९ ॥**

89. The translation of an utterance is not possible in any way. Only possibility of it is a reproduction [ with a little change as we see ] in children, oldmen, parrots, etc.

अनुनादः समानानुपूर्वीकमुच्चारणम् । अनुवादः पुनर्भिन्नानुपूर्वीकेण वचोविन्यासेन पराभिप्रायोदीरणा ॥ ८९ ॥

**अनुवादेषु काव्याभेदः**

केचिदभिमन्वते 'अशक्यानुवाद यदिद काव्य नाम । नश्यत एवानुवादेन काव्यत्वम् । काव्य हि वर्णकम्बलस्योर्ध्व-भागः, पृष्ठभागस्त्वनुवाद' इति । सोऽय भ्रमः । तत्र कारणमुपन्यस्यते—

**अनुवादेषु संगीतमात्रभेदोऽनुभूयते ।**
**अनुप्रासादि-भेदेन, काव्यं तेष्वेकमेव हि ॥ ९० ॥**

—निगदव्याख्यातमिदम् ॥ ९० ॥

Distinction between poetry and language .

Argument—I

90 In translation the change of music only is felt, due to the changes in alliteration, rhythem, etc. Through out all the translations, 'Poetry' survives unchanged. [ In other words change in language does not effect poetry and poetry remains unchanged in all the changed languages in translations ]

तत्रैव दृष्टान्तोपन्यासः—

**लिपेर् भेदेऽपि भाषाया भेदो यद्वन्न जायते ।**
**भाषाभेदेऽपि नो तद्वत् काव्यभेदस्य सम्भवः ॥ ९१ ॥**

91. As the language does not get any change even if the scripts are changed, similarly poetry remains unchanged even if the languages are changed.

[ Language is but a medium for the expression of poetry just as the script for the expression of language. As script and language cannot be treated identical so is the case with language and poetry. ]

सम्प्रति दार्शनिकेषु प्रसिद्धतम. सिद्धान्तो दृष्टान्ततयोपन्यस्यते—

**आत्मा देहस्य भेदेऽपि भिद्यमानो न मन्यते ।**
**वस्त्रभेदे यथा देहो हन्त सैवात्र संकथा ॥ ९२ ॥**

92. [ In the vedic school of philosophy ] The unchanged soul passes through the bodies changing in each birth and in each moment, as the same body passes through the garments of varied nature. Same is the story with present case : of poetry and language [ Gīta II 22 and 11–13, 16–25. ]

'येषु निवर्तमानेषु यदनुवर्त्तते तत् तेभ्यो भिन्नम्, यथा मालायां पुष्पेभ्यः सूत्रम्'–इति [ ब्रह्मसूत्र १।७।७ ] भामतीन्यायात्—

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरो पराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही– ॥

[ गीता २।२२ ]

–ति भगवद्गीतोपनिषत्प्रमाणाच्च व्याख्यातौ काव्ये वैखर्यां अध्यारोपापवादौ ॥ ९२ ॥

संख्याभेदेनापि भेदः काव्यस्य शब्देभ्य । तथा हि—

किमुच्येत तदा किंच वैखरीर् विविधाः कविः ।
जानाति च, समं तासु काव्यमेकं दधाति च ॥ ९३ ॥
वैखर्यो विविधाः काव्यं चैकमेव ततः कथम् ।
एतयोरेक-रूपत्वं सुमनोभिरुदीर्यताम् ॥ ९४ ॥

Argument–II

93: What would be said when one and the same poet holds the practice of various vernaculars and dialects and expresses the same poetry in them all [ like Ravīndranātha Tagore his Gītāñjalī in Bengālī and English as well ]

94 Here dialects are varying and poetry is remaining unvaried. How the wise men can proclaim an identity of the above two, holding different natures.

प्रतीतचरा हि राजशेखर–भोजराज–रवीन्द्रनाथादयो विविधासु भाषासु नदीष्णतया । कस्य वा च न प्रतीत कण्ठरवेणैवोदीरित साहित्य-दर्पणकृतोऽष्टादशभाषा-वारविलासिनी-भुजङ्गत्वम् । अस्ति च कविराजता-वच्छेदकोटौ बहुभाषाभिज्ञत्वस्यापि निवेशो 'यस्तु तत्र तत्र भाषाविशेषे, तेषु तेषु प्रबन्धेषु, तस्मिस्तस्मिश्च रसे स्वतन्त्र. स कविराज' इति राजशेखरोपन्यासेनैव[1] ॥ ९३ ॥

एकत्वावच्छिन्नस्यानेकत्वावच्छिन्नेनाभेदः स्वभावविपरीतः, वृक्षस्य पत्रपुष्पादिभ्यः, शरीरस्य लोमादिभ्यो वा । एतेन व्यतिरेकव्यभि-चारोऽपि कटाक्षितः काव्येन वैखरीणाम् ॥ ९४ ॥

---

१. काव्यमीमासायाः पञ्चमेऽध्याये ।

प्रसंगप्राप्ते 'किं तावद् भाषात्वमि'-ति प्रश्नेऽपि ब्रूमः—

**भाषा स्वरश्च बोधश्च वैखरी ध्वनिमात्रिका ।**
**ध्वनिः स्वरः, स्वरो गीतं तच्च काव्यात् पृथक्कला ॥ ९५ ॥**

Distinction between language and utterance—

95. Language comprises of both—'utterance and intellect or knowledge An utterance spreads upto sound only, sound or utterance is only svara and svara is a different art called music. Hence that [ Vaikharī=utterance=music ] is not the art named poetry. ]

ध्वनिमात्रं न कला, मेघादिध्वनिषु अतिप्रसंगात् । एवं चार्थमात्राया अपि भाषात्वनियामकत्वं स्थितम् । वाक्यं हि भाषा । वाक्यं च 'पदानामभिविवक्षितार्थ—ग्रन्थनाकरः सन्दर्भः.'[1] । 'वक्ष्यामश्च मध्यमात्वमपि भाषाया । नास्ति च तत्र स्वरो वैखरीरूपः । गीतं संगीतम् । तच्च स्वररूपम् । अस्ति च गीतं कलान्तरमेव काव्यात् । ततश्च काव्ये चित्रं मूर्त्तिश्चेति द्वयोः समावेशेऽपि नास्ति गीतस्य संग्रहः, तस्यार्थहीन–स्वरात्मना व्यवस्थितत्वात् । काव्यमपि गीते कलान्तरत्वेन निवेश्यत इति जायेत तत्रापि सार्थकत्वभ्रमः ॥ ९५ ॥

वाक्यरूपतायामपि वैखरीमात्रायाः काव्यं उपाधित्वमात्रमिति विवक्षयोच्यते—

**भाषाया एकदेशो या वैखरी सापि केवलम् ।**
**वाक्यरूपतयैव स्यात् काव्योपाधिः, पदं न सः ॥९६॥**

96. Here one has to behold that the utterance too, which is but a part of language, reaches to the position of an attribute to the poetry, only in the shape of 'sentence' and not in the shape of 'word'

1. राजशेखर. । द्र० काव्यमीमांसाया. षष्ठोऽध्याय ।

इदमत्रावधेयं यदिद 'शब्द'–शब्देनासकृदुदीर्यते तदपि काव्ये वाक्यात्मकमेव, न पदात्मकम्, पदमात्रस्य काव्यतया नेतुमशक्यत्वात्। स काव्योपाधिः। पद केवल पदमिति यावत्। वाक्यात्मना पदस्यापि काव्योपाधित्वस्यानुभूतचरत्वात्। 'वाक्यात् पदानामत्यन्त प्रविभागो न कश्चने'-ति नीत्या पदाना प्रातिभासिकत्वाच्च ॥ ९६ ॥

## वाक्चतुष्टयविमर्शः

ननु 'वैखरी कामं मा भूत् काव्यम्, मध्यमया, पश्यन्त्या, परया च किमपराद्धमि'–ति चेद् मैवम्, मन्यामहे एव मध्यमाया काव्यत्वम्। शब्दत्वं तु तासु केवल न वीक्षामहे। ननु 'नास्ति चेच्छब्दत्वमासां तर्हि किंस्वरूपा इमा' इति चेन्निरूपितमेवागमिकैः स्वरूपमासाम्। तथाहि जयरथोऽलङ्कारविमर्शिन्याम्—

येयं विमर्शरूपैव परमार्थचमत्कृति।
सैव सार पदार्थाना परा वागभिधीयते॥

नादाख्या जीवरूपेण सर्वभूतेषु सस्थिता।
अनादिनिधना सैव सूक्ष्मा वागनपायिनी॥

अविभागा तु पश्यन्ती सर्वतः सहृतक्रमा।
स्वरूपज्योतिरेवान्त· सूक्ष्मा वागनपायिनी॥

अन्त.सकल्परूपा या क्रमरूपानुपातिनी।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते॥

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तृणा प्राणवृत्तिनिबन्धना॥ इति॥

श्रीश्रीविद्याचक्रवर्ती चालकारसजीविन्याम्—

"सर्वैव खल्विय वाक् परा पश्यन्ती, मध्यमा वैखरीति चतुर्भि· पदै· परिमीयते। यच्छ्रुति·

चत्वारि वाक् परमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिण·।

गुहा त्रीणि निहिता नेङ्गयन्ते
तुरीय वाचो मनुष्या वदन्ति" ॥ इति

तत्र परा नाम निरुपाधिक रूपम्। पश्यन्त्यादीनि त्रीणि पुनरौपाधिकानि स्थूलत्वात् विग्रहस्थानीयानि। तथा चागमः—

स्वरूपज्योतिरेवान्तः परा वागनपायिनी।
यस्या दृष्टस्वरूपायामधिकारो निवर्तते ॥

अविभागेन वर्णाना सर्वतः सहृतक्रमा।
प्राणाह्वया तु पश्यन्ती मयूराण्डरसोपमा ॥

मध्यमा बुद्ध्युपादाना कृतवर्णपरिग्रहा।
अन्तःसजल्परूपा सा न श्रोत्रमुपसर्पति ॥

ताल्वोष्ठव्यापृति-व्यङ्ग्या परबोधप्रकाशिनी।
मनुष्यमात्रसुलभा बाह्या वाग् वैखरी मता ॥

इति। तत्र पश्यन्त्याद्यपरवाक्त्रयापेक्षया ज्येष्ठत्वादाद्या परा। द्वितीया विश्वाभिमुखीभावात् पश्यन्ती। तृतीया नाभ्यन्तरी न बाह्येति कृत्वा मध्यमा। तुरीया तु परावबोधार्थं प्रवृत्तेति वैखरी, यद्वा ख सुख दुःख वा, तद् विशिष्य राति ददातीति विखरो देहेन्द्रियसघातः तत्र भवा वैखरीति ज्ञेयम्[1]। तत्र येय परा सा शक्तत्वम्। या पश्यन्ती सोद्युक्तता। या तु मध्यमा सा प्रवृत्तता। या पुनर्वैखरो सा निर्वाहिकता। इति शक्तिमतो वक्तुरेव स्वरूप परादय"। इति।

अत्र परैवैका वाक्। सैव च त्रिविधे विग्रहे प्रकाशमाना ताभिस्ताभिः संज्ञाभिरुल्लाप्यत इति तान्त्रिकाः। तथाहि परात्रिंशिकायामभिनवगुप्तः—

परमेश्वरः पञ्चविधकृत्यमयः सततमनुग्रहमय्या परारूपया शक्त्या आक्रान्तो वस्तुतोऽनुग्रहैकात्मैव, न हि शक्तिः शिवाद्

---

१. वैखरीशब्दव्युत्पत्तौ जयरथस्तु 'विशिष्ट खम् आकाशं मुखरूप राति गृह्णाति इति विखर प्राणवायुसंचारविशिष्टो वर्णोच्चारः, तेनाभिव्यक्ता वैखरीति। विखरे शरीरे भवा वैखरीति वा केचित् ॥—अलङ्कारविमर्शिनीमङ्गले ॥

भेदमामर्शयेत्। सा शक्तिः लोकानुग्रहविमर्शमयी प्रथमत परामर्शमय्या आसूत्रयिष्यमाणानन्तशक्तिशताभिन्ना, प्रथमतर परमहामन्त्रमय्याम् अदेशकालकलिताया सविदि निरूढा तावत् पश्यन्ती उद्भविष्यदुक्ति-प्रत्युक्त्यविभागेनैव वर्तते । सैव च सकलप्रमातृसविदद्वयमयी सततमेव वर्तमानरूपा। ततस्तु पश्यन्ती यद् यद् अभीप्सित तत् तदेव समुचितकारणनियमप्रबोधित बोधसूत्रमात्रेण विमृशति। यथा अनेकभावाभावज्ञानसस्कारसस्कृताया मेचकधिय स्मृतिबीजप्रबोध-कौचित्यात् किचिदेव स्मृतिर्विमृशति। न हि प्रथमज्ञानकाले भेदोऽत्र अस्फुरत् यत्र वाच्यवाचकविशेषयोरभेद । मध्यमा पुनः तयोरेव वाच्यवाचकयो भेदमादर्श्य सामानाधिकरण्येन विमर्शव्यापारा। वैखरी तु तदुभयभेदस्फुटतामय्येव। इय या परावाग्भूमिः सैव तदुत्तर पश्यन्त्यादिदशास्वपि वस्तुतो व्यवस्थिता, तया विना पश्यन्त्यादिषु अप्रकाशतापत्त्या जडताप्रसगात्। तत्र च इदम्, एवम्, अत्र, इदानीम् इत्यादि भेदकलना न काचित्। तत एव चारभ्य वैखरी-प्रसृत-भाव-भेद-प्रकाश-पर्यन्त यदिय स्वचमत्कृतिमयी स्वात्म-न्येव प्रकाशनमये विश्रम्य स्फुरति॥' इत्यादिना महता प्रपञ्चेन बहुतरमुक्तवानेव। अत एवालकारसर्वस्वमङ्गले—

"नमस्कृत्य परा वाच देवी त्रिविधविग्रहाम्" इति पराया एव भगवत्या-स्त्रिविधता स्मर्यते। तत एव च पूर्णताप्रत्यभिज्ञाया श्रीरामेश्वराचार्याः—

अहमात्मा परामर्शः परा वागुच्यते बुधैः।
अन्तारूप त्यजन्तीव जिघृक्षन्तीव बाह्यताम्॥
परोल्लिलसिषायुक्ता पश्यन्ती प्रोच्यते बुधैः।
तत्रोल्लिलसिषावत्या वाच्यवाचकयोः क्रमः॥
नोदितो न च भेदस्य स्फुटतैव विभासिता।
किन्तु चिज्ज्योतिषस्तत्र प्राधान्याद् द्रष्टृरूपता॥
इत्यन्वर्थतयैवेय पश्यन्ती परिभण्यते।
आसूत्रितविभागोऽत्र वाच्यवाचकयो क्रमः॥ →

स्फुटास्फुटात्मरूपत्वात् गृह्यते बुद्धिमात्रतः ।
दर्शनस्यैव प्राधान्याद् मध्यभूर्द्रष्टृदृश्ययोः ॥
मध्यान्म इत्यनुस्मृत्य मध्यमा सा स्मृता बुधैः ।
सूक्ष्म तस्याः स्वरूप तु वैखर्याः स्थूलमस्त्यतः ॥
सैव वाक् स्थानकरणप्रयत्नादिबलात् पुनः ।
गृहीतवर्णरूपेय विभागस्य स्फुटत्वतः ॥
प्रधानत्वाच्च दृश्यस्य ग्राह्यत्वादिन्द्रियेण च ।
विखराख्ये शरीरे च भवत्वाद् वैखरी मता ॥' इति ॥

सन्ति चात्राभियुक्ताना चतस्रोऽपि वाच इमा क्रमेण ईश्वर–प्राज्ञ–हिरण्यगर्भ-विराट्–स्थानीया इति, तुरीय–सुषुप्ति–स्वप्न–जाग्रदवस्था–स्थानीया इति, आनन्दमय–विज्ञानमय–प्रज्ञानमयान्नमय–कोष-स्थानीया इति, स्वातन्त्र्यशक्ति–इच्छाशक्ति–स्वरूपा इति च विविधाः प्रतिपत्तय । तत्र वयमित्थ प्रतिपद्यामहे—

**मध्यमाख्या तु या वाणी पश्यन्तीत्यपरा च या ।**
**तयोरपि वयं ब्रूमः संविन्मात्रैकरूपताम् ॥ ९७ ॥**

Other kinds of 'vāc' and our theory there-on

97. The 'vāc'=speech called Madhymā [ i e lying in heart-space and falling between Vaikharī and Paśyantī ] and other one called 'Paśyantī [ i e. beholding and lying in the navel-place ]—these both are only forms of intellect and nothing else. This is how I feel—

वाणीति पराभिमतानुवादः प्रसिद्धिमात्रशरणः । सविन्मात्रता नाम ज्ञानैकरूपता । तेन पराहतं नाम मध्यमा–पश्यन्त्योः शब्दरूपध्वनित्वम् । तत्र पश्यन्तीपदे ताटस्थ्यमेव परमोऽर्थ इति पश्यामः । सर्वमप्यन्यदन्तर्भूत नामात्रैव । तदुक्त जयरथेन 'अविभागे'-ति प्रागुद्धृतस्य लक्षणस्य व्याख्यायाम्—

'अस्यार्थः। अविभागा स्थानकरणप्रयत्नप्रकारेण वर्णानां विभागहीना अत एव संहृतक्रमा तथैवान्तःस्वरूपज्योतिः स्वयंप्रकाशा स्वस्यात्मनो ज्योतिश्च सर्वत्र हि सर्वविधायिनी शक्तिरेवेति वा अन्तः सूक्ष्मबीजाद् अङ्कुरमिव बहिरुन्मिषन्ती किञ्चिदुच्छूना पराया मध्यमायाश्चावस्था तटस्था पश्यतीति पश्यन्तीत्युच्यत' इति ॥९७॥

I For Madhymā and Pasyantī see my introductory samskrta-gloss on this Kārikā

II Madhyamā lying in a middle space of two other 'vāc' on its both the sides.

III. Pasyantī : Beholding one which is standing nuteral from dualness like the liquid=rasa of egg of peacock having numerous colours there-in, but indistinctly.

**अर्थोल्लेखवती संविन्मध्यमेति निगद्यते।**
**अर्थानुल्लेखशुद्धा तु पश्यन्तीत्यभिधीयताम् ॥ ९८ ॥**

Our definitions of Madhyamā etc.

98. As the samvid=soul, intellect or mind, having the objects apparent in it is called Madhyamā, likewise Paśyantī must have been called the soul, intellect or mind having its original or unmixed form as it is [ Eventually these both are samvid only and not sound as such. ]

उल्लेखो विमर्शः। तदुक्त परात्रिंशिकायामभिनवगुप्तपादैः "मध्यमा पुनः तयोरेव वाच्यवाचकयोः भेदमादर्श्य सामानाधिकरण्येन विमर्शव्यापारा" इति। यत्र च वाच्यवाचकभावार्थमपेक्षितं द्वैत न भवति वाच्यवाचकयोः सा पश्यन्ती। नास्ति तत्रोल्लेखात्मानुपदोक्तस्वरूपो विमर्शोऽपि। ते इमे द्वे संविदौ। तत्र पश्यन्त्या शुद्धत्वमिदमेव यदस्तमितभेदत्वेनातिशयोक्तिन्यायेन वागर्थयोरध्यवसानम् ॥ ९८ ॥

एतद् यत् तत् तु पूर्वार्धमेतदुत्तीर्णविग्रहम् ।
यत् परार्धं परार्घ्या सा परा संविदधीश्वरी ॥ ९९ ॥

99. It is all the 'first Half' i e. the world phenomena and beyond it there lies one latter and better Half which is but the supreme conscience and this is why it is named as Parā=beyond the reach and therefore, supreme It is also a 'samvid' and the Queen of all other samvids and also of this whole universe. [ As 'vāc' this samvid is implicit in VP ]

एतद् वैखरीत· पश्यन्ती यावत् । पूर्वार्द्धम् आविद्यिको जगत्प्रपञ्च । एतत् पूर्वार्द्धम् उत्तीर्य विद्यमानो विग्रहो यस्य तादृश यत् परम् उत्तरम् अर्धं परार्धनाम्ना प्रतीतचरम्, सा परा सविदधीश्वरी । सविच्च सविदामधीश्वरी च । सा च परार्घ्या परममुत्कृष्टा ॥ ९९ ॥

परायाः परमेश्वर्याश्छायां जीवात्मरूपिणीम् ।
आश्रिता मध्यमैवैका संवित् काव्यमलङ्कृता ॥१००॥

Relation between all the three samvid and poetry

100. It is the meaning-part of Madhyamā intellect devoted to, and dependent on, the human-soul, which is but the shadow of 'That supreme Parā', is capable to reach the stage of poetry in event when it possesses 'Alamkāra=Alambhāva= Adequacy '

परमेश्वरी परमेश्वराद्वैतमयी परमेश्वरविग्रहैव च या परा तस्या एव छाया सूक्ष्मशरीरसरोवरान्तर्निपतित प्रतिबिम्बमेव जीवात्मा । तामेता छायात्मतया परमसुन्दरी पराया. प्रतिमामाश्रित्य लब्धोदया मध्यमाख्या सविदेव काव्यम् । न हि तस्या ध्वनिना कोऽप्यर्थः । आत्मपरिपूर्णा हि सा । ननु जीविते वपुषि लब्धोदया मध्यमा सविदेव काव्यं चेद् अकाव्यात् कथमस्या भेद इति चेत् साधु अत एवोच्यते अलङ्कृता इति । यश्चासावलङ्कारः स च लक्षितपूर्व एवास्माभिरात्मरीत्या ॥१००॥

ननु 'मध्यमा एव एका काव्यम्' इति चेत् काव्ये पश्यन्त्याः किं स्थानमिति चेत्, नास्ति किमपीति ब्रूमः । तथापि—

रसोल्लेखसमाधिस्तु निर्विशेषात्मचर्वणः ।
पश्यन्तीत्यभिधानेन काव्ये कश्चिदुदीर्यताम् ॥१०१॥

Position of Paśyantī in poetry.

101. The keen concentration ( Samādi ) due to, and into the touch of bliss ( rasa ) and having its consequence the repeated joy of the soul alone ( without any attribute ), may some-how be called as Paśyantī in poetry. [ As rasa is not a quality of poetry, therefore, Pasyantī is also beyond its limits. ]

काव्यस्य यत् फलं तत्र य एको रसः, तत्र या विगलितवेद्यान्तरतया निर्विशेषता तामिमामद्वयमयीं स्थितिमादाय तु कथंचित् पश्यन्तीमपि काव्ये लक्षयितुं पारयेम । तत्र उल्लेखः परामर्शः । तत्र यः समाधिश्चित्तैकतानता, ततश्च परिहृताखिलतद्व्यतिरिक्तभावा लयावस्था तामेव काव्ये पश्यन्तीति पदेन कदाचिद् ब्रवाम । ततश्च ध्वनिः मौनेनैवानुशील्यमाने काव्ये सव्यभिचारः, पश्यन्ती चाद्वयतया द्वैतमये काव्येऽनुपलब्धप्रसरा । परा च परैवेत्यस्पृष्टसमस्तकलायास्तस्याः का नु कथा काव्यमये पार्पञ्चिके संविदाधिराज्ये । एवं च याऽवशिष्यते सा मध्यमैव काव्यमिति पारिशेष्यसिद्धम् । तत्रापि शाखाद्वयम् । शब्दज्ञानशाखा अर्थज्ञानशाखा चेति । नैतदत्र विस्मर्तव्यं यदस्यामपि मध्यमायां या शब्दज्ञानशाखा साप्युपाधिभूतैव, न तु काव्यस्य स्वरूपम् ।

ननु "कथमुच्यते रसोल्लेखसमाधिर्निर्विशेषात्मचर्वण" इति, तत्र विभावानुभावव्यभिचारिणामव्यतिरेकात् । यदुच्यते—

१. चित्तवृत्तिरूपाणां विभावानुभावव्यभिचारिणां परस्परं स्थायिना च संयोगाद् रसस्य तत्संवलितस्य आत्मचैतन्यस्य निष्पत्तिरानन्दकलयाऽभिव्यक्तिरि-ति,

२. यथा हि शरावादिना पिहितो दीपस्तन्निवृत्तौ संनिहितान् पदार्थान् प्रकाशयति, स्वयं च प्रकाशते, एवमात्मचैतन्यं विभावादिसवलितान् रत्यादीन्' इति,

३ भाग्नावरणचिद्विशिष्टो रत्यादिः स्थायी भावो रस' इति,

४ रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रस" इति,

५ साधारणीकृतेषु दुष्यन्तशकुन्तलादेशकालवयोवस्थादिषु भोगकृत्त्वव्यापारस्य महिम्ना निगीर्णयो रजस्तमसोरुद्रिक्तसत्त्वजनितेन निजचित्स्वभावविश्रान्तिलक्षणेन साक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादिः, तद्भोगो वा रस" इति,

६ काव्ये नाट्ये च व्यञ्जनव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायां सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छादिते स्वात्मनि, अज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यशकुन्तलादिविषयकरत्यादिरेव रस" इति,

७. काव्यभावनाविशेषरूपस्य दोषस्य महिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरत्यादिमदभेदबोधो मानसः काव्यार्थभावनाजन्मा रस" इति च

महद्भिराचार्यैः पण्डितराजादिभिः, तदुपजीव्यैरभिनवगुप्तादिभिश्च[१] ।

उच्यते । "नारदो हि भगवतो दर्शनेन समुत्थितानन्दसंप्लवो भगवन्तमपि विसस्मारे"-ति भागवती समुपास्थापयामैव गाथाम् [ पृ० ११ ] अयमेव ह्यानन्दसप्लवो यत्समस्तालम्बनविस्मृतिः । अत एवोक्तिः "सख्यः

१. रसगङ्गाधरे । २।४ ध्वन्यालोककारिकालोचने । अत्रोभयोः साम्यवैषम्ये समालोचकैः स्वयमुत्प्रेक्ष्ये । एतदेव तु वदामो यदत्र यत् प्रथम मत तदास्माकीन स्वकीयमेव रससूत्रव्याख्यानाश्रितम् ।

शपामि यदि किञ्चिदपि स्मरामी''-ति। अत एव सप्लवस्यास्य 'लय' इति यथार्थमभिधानम्। इयमेव च तृप्तिर्यत् सतर्पण-पदार्थ-स्मृति-प्रमोषः। हासादयो कि तदानन्दमात्रामुत्थाप्य तच्छायायामधस्तादेव विश्राम्यन्ति, न तु स्पृशन्ति ताम्। सैव चानन्दसुषुप्तिर्यदुत पश्चात्तनं प्रत्यभिज्ञानम्। अहो कीदृशी नु सा स्थितिर्यत्र सर्वमपि दूरे स्थितम्, ऋते स्वात्मानन्द-सप्लवम्। यदि त्वाग्रह एवैष यदुतानन्दसप्लवेऽपि स्पृशन्त्येवोपाधय एतम्, तर्हि निर्विशेषत्व रत्यादिभिन्नविषयराहित्येन नेयम्॥ १०१॥

I. According to the old theories in the definition of rasa the Sthāyī Bhāva with other bhāvas, is its invariable attribute In my opinion nothing is to remain out as an attribute after sinking into the bliss. This is why it is termed by Ascetics and Tāntrikas as 'laya'=complete sinking in bliss At this juncture the attainer of the bliss has to do nothing with any thing else except the bliss that is attained. This is why—'being touched by her lover one swears before her friends—'I know nothing what happened there-after'

II All the existing things are classified into two Halves by Indian poet-philosophers First one consists of entire universe attainable or non-attainable and is named Māyā or Pūrvārdha. And the latter one is the only-ness of 'That Supreme Entity' which has no limits and no attributes and called 'Brahman' or 'Parārdha.' In samskrta only 'parārdha' word is used. The word 'Parārdhya' is its derivation in the sense 'of a very high order' or supreme one'. Kālidāsa uses this word reccurently such as in Raghuvamśa III. 27, VI. 4.

[ K. 101 ]

### अर्थस्य ज्ञानैकरूपत्वम्

एवं साधितं काव्ये ध्वनिरूपस्य शब्दस्य व्यभिचरितत्वम्, अव्यभिचरितस्यापि च मध्यमारूपस्य सवित्तत्त्वस्य यः कश्चन मानसशब्दपक्षस्तस्याप्युपाधित्वम्। यश्चास्या मध्यमाया अर्थपक्षः साम्प्रतमस्यापि बौद्धत्वमेवाऽनुभवन्तो ब्रूमः—

**मध्यमाख्या तु या संवित् तस्याः पक्ष-द्वयं स्थितम्।**
**शब्दोऽर्थश्चेति यत् तत्र शब्दे बौद्धत्व-मास्थितम् ॥१०२॥**

**Subjectiveness of poetic meaning**

102 Of intellect, reaching the stage of Madhyamā, two are the parts—(i) Word and (ii) Meaning. Out of which, enough has already been said to prove 'word' subjective.

आस्थितं स्वीकृतं संसाधितं चेति यावत् ॥ १०२ ॥

**यस्त्वर्थस्तस्य बौद्धत्वं त्यक्त्वा नान्याऽस्ति वै गतिः।**
**संविद्रूपस्य कस्यापि भिन्नत्वे युक्त्युपप्लवात् ॥१०३॥**

103. For Meaning too there is no help but to accept its subjectiveness It is so because all the arguments in favour of its objectiveness would be totally rejected, as it ( meaning ) too is fully identical with intellect or the mental faculty as such.

**अतीताऽनागत - श्रौत - प्रौढोक्ति - प्रतिपादिताः।**
**कवीनां समयात् सिद्धाश्चार्था बौद्धा हि केवलाः ॥१०४॥**

Arguments for

104. Meanings of past, future, tales, imagination or utopia and poetic licence are mental and subjective alone. It is an open fact.

अतीता अर्था रामयुधिष्ठिरादयः। इदानीन्तनानामपि काव्यानुशीलनकाले अविद्यमानत्वात्। न हि हिमाचलमधिकृत्य कृतस्य काव्यस्य यत्र पाठस्तत्र सर्वत्र हिमाचलस्तिष्ठति। अनागता भविष्यत्कालिकाः। यथा श्रीवाल्मीकीये रामायणे, यथा वा आङ्ग्लशासने तदुत्तरकालिकं स्वातन्त्र्यमधिकृत्य कृतेषु भारतशतकादिषु, विद्यमानेष्वपि विप्रकृष्टानामपि कथा प्रेम्णा श्रूयते कादम्बर्यादिषु, हर्षचरितादिषु, दशकुमारचरितादिषु, कालकाचार्यचरितादिषु वा। कथासरित्सागरे हि चतुर्दारिकालम्बके समागतान् कास्कान् न कथाविशेषान् स्थानविशेषांश्चाकर्णयामहे। ते सर्वे पदार्था. श्रौताः। अत्रत्येभ्यो वैदेशिकाना जीवनधर्माः कथामात्रविषयाः। ते हि श्रौता एव। प्रौढोक्ति-प्रतिपादिताश्चार्था आनन्दवर्धनादिभिः प्रतिपादिताः। तथा हि—

प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुतोऽन्यस्य दीपकः॥ [ध्व० २.२४]

इत्यत्र "अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थस्तस्यापि द्वौ प्रकारौ कवे कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीर एकः, स्वतः सम्भवी च द्वितीयः। तत्र

*कविप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा—*

सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्।
अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान्॥ इति।

*कविनिबद्धवक्तृ-प्रौढोक्तिमात्रनिष्पन्नशरीरो यथा—*

शिखरिणि क्व नु नाम कियच्चिर
किमभिधानमसावकरोत् तपः।
सुमुखि येन तवाधरपाटल
दशति बिम्बफल शुकशावकः॥ इति।

सादरवितीर्णयौवनहस्तालम्ब समुन्नमद्भ्याम्।
अभ्युत्थानमिव मन्मथस्य दत्त तव स्तनाभ्यामि'॥–ति वा॥

*स्वतःसम्भविनश्चार्थस्य* समनन्तरकारिका विषय'। अत्र 'सज्जयता -त्यत्राभिनवगुप्तः "अत्र वसन्तश्चेतनोऽनङ्गस्य सखा सज्जयति केवल न तावदर्पयति इत्येवविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्-भेदिनी वसन्तदशा यत उक्ता अतो ध्वन्यमान मन्मथोन्माथस्यारम्भं क्रमेण गाढगाढीभविष्यन्तमभिव्यनक्ति। अन्यथा 'सपल्लवसहकारोद्गम' इति वस्तुमात्र न व्यञ्जक स्यात्। एषा च कवेरेवोक्ति। शिखरिणीत्यत्र च लोहित बिम्बफल शुको दशतीति न व्यञ्जकता काचित्, यदा तु कविनिबद्धस्य साभिलाषस्य तरुणस्य वक्तुरित्थ प्रौढोक्तिस्तदा व्यञ्जकत्वम्। सादरेत्यत्र च स्तनौ प्रधानभूतो, ततोऽपि गौरवित कामास्त्राभ्यामभ्युत्थानेनोपचर्यते। यौवनं चानयो· परिचारकभावेन स्थितमित्येवंविधेनोक्तिवैचित्र्येण 'त्वदीयस्तनावलोकनप्रवृद्धमन्मथावस्थः को न भवती'–ति भङ्ग्या स्वाभिप्रायध्वनन कृतम्। तत्र 'तारुण्येनोन्नतौ स्तनौ' इति हि वचने न व्यञ्जकता काचित्' इति। अस्ति च काव्य-प्रकाशादिष्वप्येतेषा प्रौढोक्तिमात्रसिद्धानामर्थाना विस्तरः। न चैते लोकसिद्धाः, तेषा स्वतः सम्भवित्वेन पृथग्गणनात्।

*कविसमयसिद्धाश्चार्थाः*

पादाघातादिभिरशोकादीना विकासादयः। ते च काव्यमीमासाया १४–१६–अध्यायेषु राजशेखरेण, तमेवानुगच्छद्भ्या हेमचन्द्र-वाग्भटाभ्या च तयोः काव्यानुशासनयोः सूत्रवृत्तिभ्या भूम्ना प्रपञ्चिता एव। तद्यथा प्रवहत्यपि जले कमलाना वर्णनम्। यथा—

मरुल्लीलालोलल्लहरिलुलिताम्भोजपटली–
स्खलत्पांसुव्रातच्छुरणविलसत्कौङ्कुमरुचि। इति

श्रीभागीरथीवर्णने पीयूषलहर्यां पण्डितराजस्य।

दीर्घीकुर्वन् पटु मदकल कूजित सारसाना
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।–इति

अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।
विशोषिता भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम्' ॥ इति
च कालिदासस्य ।

उक्तमेव च भट्टिना 'न तज्जलं यन्न सुचारुपङ्कजमि'-ति ।

एवमेव यशसः, हासस्य च शुक्लत्वम् । तथा हि—

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्यस्ता यशसामिवे'-॥ ति

रघोर्यशसो वर्णने,

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहास' ॥ इति च कैलासस्य चित्रे
हासस्य शुक्लत्वं कालिदास एव । इदम्, अन्यच्चैवंविधं यत् कविसमय-
मात्रप्रसिद्धं तत् सर्वं केवलं प्रातिभमेव, न तु लौकिकमिति स्थितमेतेन यत्
काव्यत्वेनाद्रियमाणोऽर्थः संविन्मात्रप्रसूतिः, न तु बाह्योऽपीति ॥ १०४ ॥

I. Meanings—

a of Past · Yudhisthira of Bhāravi, Nala of Śrīharsa or Hamlet of Shakespeare

b. of future · Rāma in Vālmīki's Rāmāyaṇa. Indians believe-'Vālmīki by his yogic intuition called Ṛtambharā prajñā had foreseen the entire life of Rāma In 'Bhāratasatakam and 'Bhāratavijayam' ( drama ) declared India's Independence much before the actual Independence day 15. 8.47. reach ‹ a

other forecastings of various scientist fall in this category.

c. of tales : Heroes of stories like Naravāhandatta of Kathāsaritsāgara

d. of imagination : 'Spring is preparing flower-arrows for Cupid to shoot upon the beautiful ladies' Here personification is just imaginary [ DH. II. 24-gloss ]

e. of Poetic licence . I The Aśoka tree blooms with flowers only after it is hit by the decorated left footpoint of a handsome young lady. [ Kālidāsa Meghad. II 15 Kumāras II. 26, Mālavikāgni. III. 285-297, Ratnāvalī-III ].

II. Every where there is water there is lotus, even in the currents of river and in the water of sea. [ KM. chap 14-16, Kāvyānuśasans of Hemacandra and Bāgbhata ]

II. The word 'Praudhokti' is translated as-'Ornate expression' [ DH. II. 24 Km. ], 'Bold assertion of poet' [ KP. IV. 40 GJ. ] 'Hyperbolic expression [ KP. IV. 40 RC ] Later on GJ. has used the proper word 'Imaginary' too. [ KP. IV. 85-90 illuslrations.

[ K. 104 ]

स्वतःसंभविनोऽर्थस्य काव्ये ज्ञानैकरूपता ।
स्वतः-संभविनी नो चेद् वह्निशब्दो दहेन्मुखम् ॥१०५॥

105. Even the veritable meanings are subjective only, otherwise while uttering the word 'fire' speaker's mouth should have been burnt

यदुक्तमानन्दवर्धनेन 'स्वतः सम्भवी य औचित्येन बहिरपि सम्भाव्यमानसद्भावो न केवल भणितिवशेनैवाभिनिष्पन्नशरीर. । यथा—

शिखिपिच्छकर्णपूरा वधूर्व्याधस्य गर्विणी भ्रमति ।
मुक्ताफलरचितप्रसाधनाना मध्ये सपत्नीनाम् ॥ इति ।

अत्राभिनवगुप्तः 'शिखिमात्रमारणमेव तदासक्तस्य कृत्यम्, अन्यासु त्वासक्तो हस्तिनोऽप्यमारयदिति हि वचनेनोक्तमुत्तमं सौभाग्यम् । रचितानि विविधाभि. भङ्गीभिः प्रसाधनानि इति तासां सम्भोगव्यग्रिमाभावात् तद्विरचनशिल्पकौशलमेव परममिति दौर्भाग्यातिशय इदानीमिति प्रकाशितम् । गर्वश्च बाल्याविवेकादिना भवतीति नात्र स्वोक्तिसद्भावः शक्यः । एष चार्थो यथा यथा वर्ण्यते, आस्ता वा वर्णना, बहिरपि यदि प्रत्यक्षादिनाऽवलोक्यते तथा तथा सौभाग्यातिशय व्याधवध्वा द्योतयति' इति[1] ।

एवमभिनवगुप्तोऽपि वर्णनासारतामेव प्रथमयति स्वतःसम्भविनोऽर्थस्य । या च प्रत्यक्षादिना दर्शनस्य गाथा तत्रापि वयमोमिति ब्रूमः, काव्यत्वं तु तत्र न भवतीत्येव तु तत्र पश्याम । तत्र कारणं वह्निशब्दोच्चारणे मुखदाहप्रसङ्गः । तदुक्तं 'स्वतः सम्भविनोऽप्यर्थस्य ज्ञानैकरूपतैव काव्ये स्वतः सम्भविनी'ति । प्रत्यपोपदश्चामुमेवार्थं शबरस्वामिप्रभृतयः शब्दशक्तिविचारे 'प्रत्याय्य-प्रत्यायकभावं'सिद्धान्तयन्तः । तथा च

१. ध्वन्यालोक—२।२४ वृत्तिलोचने ।

शरबस्वामी—

क 'स्यादेतत्, नैव शब्दस्यार्थेन सम्बन्धः, कुतोऽस्य पौरुषेयता अपौरुषेयता वेति, कथम्, स्याच्चेदर्थेन सम्बन्ध क्षुरमोदक-शब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। उच्यते, प्रत्याय्यस्य प्रत्यायकस्य च यः सज्ञा-सज्ञि-लक्षण. [सोऽत्र शब्दार्थयोः सम्बन्ध] इति। आह, यदि प्रत्यायक· शब्दः, प्रथमश्रुत. कि न प्रत्याययति ? उच्यते, सर्वत्र नो दर्शन प्रमाणम्। **प्रत्यायक इति हि प्रत्ययं दृष्ट्वाऽवगच्छामो,** न प्रथमश्रुत इति प्रथमश्रवणे प्रत्ययमदृष्ट्वा। यावत्कृत्वः श्रुतेन 'इयं सज्ञा अय सज्ञी'-त्यवधारित भवति तावत्कृत्वः श्रुतादर्थावगमः इति। यथा चक्षुर्द्रष्टृ, न बाह्येन प्रकाशेन विना प्रकाशयतीत्यद्रष्टृ न भवति। यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हि शब्दस्यार्थेन सम्बन्धः। कुत. ? स्वभावतो ह्यसम्बद्धावेतौ शब्दार्थौ। मुखे शब्दमुपलभामहे भूमावर्थम्। शब्दोऽय न त्वर्थ., अर्थोऽय न शब्द इति च व्यपदिशन्ति। रूपभेदोऽपि भवति। गौरितीम शब्दमुच्चारयन्ति, सास्नादिमन्तमर्थमवबुध्यन्त इति। पृथग्भूतयोश्च यः सम्बन्धः स कृतको दृष्ट·, यथा रज्जुघटयोरिति।' इति,

ख. '**अथ** गौरित्यत्र कः शब्दः। गकारौकारविसर्जनीया इति **भगवानुपवर्ष.**, श्रोत्रग्रहणे ह्यर्थे लोके शब्द-शब्दः प्रसिद्धः। ते च श्रोत्रग्रहणाः। तत्र पूर्वपूर्ववर्णजनितसस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः। अथ गौरित्यस्य शब्दस्य कोऽर्थः ? सास्नादिविशिष्टाऽऽकृतिरिति ब्रूमः। अथ क· सम्बन्ध इति ? यत् शब्दे विज्ञाते अर्थो विज्ञायते। स तु कृतक इति पूर्वमुपपादितम्।' इति च महता सरम्भेण, महता च सन्दर्भेण[1] विषयेऽत्र प्रवृत्तः।

एवमेव च शास्त्रदीपिकादिषु पार्थसारथिमिश्रप्रभृतयः प्रत्याय्यप्रत्यायकभावमेव सिद्धान्तत्वेनात्र[2] समाम्नासिषुः।

१.-२. मीमासादर्शनस्य १।१।५ सूत्रभाष्ये।

अत्र 'प्रत्यायक इति प्रत्ययं दृष्ट्वाऽवगच्छामः' इति यद् भाष्य-कर्तुरस्य वचनं तत्रावधेयत्वार्यः। तत्र हि 'प्रत्यय' एव परमोऽर्थः। प्रतिपादयिष्यामश्चामुमेवार्थं शाब्दिकानां बौद्धार्थनिरूपणावसरेऽत्रैवानु-पदमेव[1]। तदेव स्वतः सम्भविता नाम बौद्ध-बाह्ययोरर्थयोः सम्वाद-मात्रत्वम्, न त्वन्यत् किंचिदिति। सम्वादोऽप्ययं बौद्ध एवार्थो न बाह्यः॥ १०५॥

I Svatah–sambhavin= readily available in world. Translations of this term too run thus

1. Naturally existing　Kisnamūrti [ DH. II 24 ]
2. Self-existing　G. N. Jhā [ KP IV 40 ]
3 Self-possible　. R.C. Dwivedi [ KP. IV. 40 ]

II. See ŚB & Śāstradīpikā on 1 1.5

युक्त्यन्तरम्—

हिमाचलेन चाप्यस्तु चूर्णितं नगरादिकम्।
क्रमेण विश्वमात्रं च कुमारं यत्र पठ्यते॥१०६॥

106 Likewise cities and gradually the entire world should have been smashed out by the Himālayas where-ever (the epic) Kumāra [–sambhavam ] is read [ which begins with the word 'Himālaya' ].

कुमारं कुमारसम्भवं नाम कालिदासस्य महाकाव्योत्तमम्। अस्ति च तदारम्भो हिमालय-शब्द-पूर्वकः 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराज' इति। तत्र हिमालय इति योऽर्थः स चेद् बाह्य एव, यथा गौरित्यस्य शब्दस्य सास्नादिमानर्थः पञ्चभूतमहा-पिण्डरूपः, तदा ससार एव विनश्येत् कुमारसम्भवपाठस्थलेषु पूर्वापरौ

1. ११२ कारिकातद्वृत्तिभ्याम्।

तोयनिधौ वगाह्य स्थितस्योच्छ्रिततमशिखरमालिनः शिलोच्चयस्यास्य भारेण विश्वमात्रस्य चूर्णीभावप्रसगात्, सुरासुराणामिव समुद्रमन्थनावसरे मन्दरस्य भारेण। न स्याच्च काव्यारम्भ एव, हिमाचलमुच्चारितवतः कवेरेव चूर्णनात्। ततश्च बौद्ध एवासौ यद् हिमालयो नाम कुमारसम्भववस्तुनिर्देशपद्ये उत्तरत्र च ॥ १०६ ॥

तर्कान्तरम्—

संसारमात्रे चैतस्मिन् निष्क्रियत्वं परं भवेत्।
काव्यमात्रस्य पाठेन सर्वार्थाऽऽसादनात् सुखम् ॥१०७॥

107. And every thing would readily be available through the reading of poetry only. Therefore no activity is needed for any thing in the whole world—[ if the poetic meaning is objective ]

यदि च अबौद्धः, ततश्च बाह्य एवार्थक्रियाकारिताक्षम आकृतिमान् पिण्डात्मा अपिण्डातमा वाऽमूर्तः पदार्थ काव्य-घटकीभूत-पदलभ्योऽर्थः, कृत तर्हि वाणिज्यादिना। काव्यमात्रपाठे कार्षापणादिशब्दमात्रोच्चारणेन मुद्राविशेषाणामुपस्थितेः, प्रत्युपस्थितमुद्राणा च अस्माक काव्यमात्रपाठ एव परमो जपविषयः, न तु श्ववृत्तिप्रत्युद्गमः ॥ १०७ ॥

ईश्वरो ब्रह्म धर्मादि परलोकादिकं तथा।
कृत्स्नमेतदनध्यक्षभावगाथां जिहासतु ॥१०८॥

108. God, Brahman, Dharma, Adharma, etc , and the things like Next-birth ( after death ), etc., should give up their invisibleness [ if their names are used in poetry ].

*Īśvara* is not perceptable through sense organs. Only oracles and inference are the means therefor [ Raghuvamśa–IX. 28 ]. So is the *Brahman* which is beyond the reach of what is not Brahman itself.

*Dharma* and *Adharma* are the impressions begotton in soul and accepted as the only factors responsible for worldly achievements, whatsoever [ Udayana's Nyāya-kusumañjali–I. 9, ] *Paraloka* the next world attainable only atfer death or by rebirth. Heaven is one of them and most of the religions believe in it though not seen on earth These three things are also not visible. If the poetic meaning is objective all the above mentioned things would be visible for the reader of poetry. [ My gloss on this K. ]

अनध्यक्षत्वगाथाम् अप्रत्यक्षत्वकथा जिहासतु त्यक्तुमिच्छतु ।

**ईश्वरो** नाम 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष' ।[१] स स च 'ईशा वास्यमिद सर्वमि'-त्यादिभि श्रुतिभिरुपपादित , 'क्षित्यङ्कुरादिकं सकर्तृक कार्यत्वाद्, घटवदि'-त्यादिभिरनुमानैश्च समर्थितः, अत एव 'आप्तवागनुमानाभ्या साध्य त्वा प्रति का कथे'-त्यादिभिर्महाकविभि क्रमेणाङ्गीकृतोभयप्रमाणक , 'पञ्चमहाभूतमनोबुद्धिचेतना'-त्मना च प्रत्यक्षीकृताष्टमूर्तिक । उक्त न्यायकुसुमाञ्जलेर्विवृतौ हरिदासेन—

'शुद्ध-बुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिला·, क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपता·, शिव इति शैवा , पुरुषोत्तम इति वैष्णवा , पितामह इति पौराणिका , यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बरा., उपास्यत्वेन देशित इति मीमासका., लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न

१. योगसूत्रम् । २. न्यायकुसुमाञ्जलेः १।९ कारिका ।

इति नैयायिका', किं बहुना यं कारवोऽपि विश्वकर्मेत्युपासते, तस्मिन् जातिगोत्र-प्रवर-चरण-कुल-धर्मादिवदाससार सुप्रसिद्धानुभवे भगवति भवे सन्देह एव कुत.' इति ।

ब्रह्म 'कस्मिन्नु खलु आकाशमेतदोत च प्रोत च' इत्यादिभिर्वचनैः प्रतिपादितं नित्य, विभु, शुद्ध, मुक्तं च किञ्चिद् आगोपम् आ चोदहारिणीरात्मभावेन प्रसिद्ध 'तस्मिन्नपो मातरिश्वा दधाती'-ति श्रुतिप्रतिपादितभूमभाव वस्तु ।

धर्मादि सुखादिभोगाव्यवहितपूर्वतया स्थितः कर्मजन्य आत्मनिष्ठः सस्कारविशेषः । तदुक्तमुदयनाचार्येण 'चिरध्वस्त फलायालं न कर्मातिशय विना'-इति । तच्च धर्मादिकम् अदृष्टत्वेनाभ्युपगतम्, अनुमानैकसाध्यत्वात् । आदिपदेनाधर्मोऽपि ग्राह्यः । तच्चैतदुभय पुण्य-पाप-कुशलाकुशलकर्मतया तैर्थिकेषु सुप्रतीतम् ।

परो लोक. स्वर्गप्रभृति. । आदिपदेन जन्मान्तरमपि ।

एतेषा काव्येषूपादानात् प्राप्त तावत् प्रत्यक्षत्वम् । काव्यघटकीभूतपदोपस्थितानामेतेषां स्वस्वरूपेणैवोपस्थितेरभ्युपगमात् । स्व-स्वरूपं चैतेषां तदेव यद् लोके प्रतीतम्, वेदे वा । तेनैव रूपेणैतेषामुपस्थितेः कीदृशी नामैतेषामप्रत्यक्षता, कीदृशी च विवादास्पदता । ननु 'लोके धर्माधर्मादिकमदृष्ट चेत् काव्येऽपि तेषा तथारूपत्वमेव गृह्येत, न तद्भिन्नत्वमिति रिक्तमेतत्प्रत्यक्षत्ववच''-इति चेदानुभविकस्य विज्ञानमात्रत्वस्यापलापे अदृष्टानामपि दृष्टत्वस्वीकारे का नु हानिः काव्यविदामार्याणाम् । अस्त्येव च न्यायः 'नष्टस्य कान्या गतिरि'-ति । अध्यक्षत्वं च न केवल चक्षुरिन्द्रियमात्रगोचरत्वम् । अक्षमिन्द्रियम्, अक्षमक्षं प्रतीति प्रत्यक्षस्य या व्युत्पत्तिस्तया तस्य मानसप्रत्यक्षविषयेष्वपीश्वरादिषु सभवान्नास्ति हानिः ।

ननु ब्रह्मणः प्रत्यक्ष-परोक्षत्वोभयाविषयत्वे कथं प्रत्यक्षत्वमिति चेदौपनिषदा अत्र चोद्याः 'यत् साक्षाद् अपरोक्षाद् ब्रह्मे'–ति जञ्जपूकाः। किंच यदिदमक्षं तदपि मनोऽधिष्ठितमेव विषयान् विसिनोति, मनोऽपि तदवधि निष्प्राण यदवध्यात्माधिष्ठितत्वेनेन्द्रियाणि नानुगृह्णीते। यश्चासावात्मा स क', किंप्रमाणकश्च ? वेदान्ताना महावाक्यैरस्य ब्रह्मत्व कस्य न प्रतीतम् ? ततश्च "योऽस्याध्यक्षः परमेव्योमन् सोऽअङ्ग वेद यदि वा न वेदे"–त्यादिभिः, विज्ञातार वा अरे केन विजानीयादि'–त्यादिभिश्च वचनशतै तस्य सर्वाध्यक्षत्वे स्वप्रकाशत्वे च का नूपप्लुतिः। क्षम् क्षरम्, तद्विपरीत चाक्षरमिति सुगमान्वयाऽक्षशब्दो भगवति सर्ववेदान्तप्रतिपाद्ये परमब्रह्मण्यपि। तस्यापि काव्यपात्रे तद्वाचकपदप्रयोगात् स्यादेव सेवकवत् स्वामिन इव निदेशकरणायैवोपस्थानम्। नास्ति च तथा। अत एवोपहासः—'कविः श्रीमन्त कश्चित् स्तौति

अस्ति श्रीपतिवक्षसः कृतपदा कोणे नितान्त चला
काचित् कौशिकवाहना भगवतीत्युक्त्याऽर्च्यमाना जनैः।
सा लक्ष्मीरिति पूज्यता यदि जनैर्नास्ति क्षतिः, श्रीरिति
श्रीमद्धाम्नि धृतस्थिरस्थितिरिय पुण्यैव पूज्या तु नः' ॥ इति।

स्तुत्या प्रीणितश्च श्रीमान् कोषाध्यक्षमादिशति 'दीयता कविरत्नेभ्य एभ्यो दशशती सुवर्णानामिति। 'श्वोऽह द्रष्टव्य'–इति कोषाध्यक्षेणानुरुद्ध. कविर्यथासमयं तमुपेयिवान्, अन्वरुद्ध च दातुं दशशती सुवर्णानाम्। न चावाप किमप्युत्तर मौनिनः कोषाध्यक्षात्। निर्बन्धपृष्टः स्मारितराजवचनश्च स भर्त्सयति 'कीदृशानि तानि सुवर्णानी'-ति। कविर्भूयोपि राजानमुपेत्य कोषाध्यक्षवचन श्रावयति। राजापि विहस्य प्रतिब्रूते 'दत्तान्येव भवद्भ्यो दशापि शतानि सुवर्णानामि'-ति। नेत्युक्तौ स्पष्टयति 'वचनमयानि तानि, न तु सत्यानी'–ति। 'किमित्येवं वय विप्रलभ्यामह' इत्युक्तौ कवि प्रति भूयोऽपि श्रीमानसौ मौनमुद्रा जहाति—"यथा वचनैरेव भवद्भिर्वयं प्रीणितास्तथैवास्माभिर्भवन्तोऽपि

वचनैरैवे'–ति कीदृशोऽत्र वाद'' इति। अश्वमेधवेत्तापि ब्रह्महत्यां तरतीत्युक्तौ कृत तर्हि प्रयोगेणेति प्रश्ने मीमासकैरप्युच्यते 'या हि वाचनिकी मानसी वा ब्रह्महत्या साऽश्वमेधज्ञानेनाऽप्यपैति या च सत्या सा प्रयोगेणैवे'–ति। ननु या हि वाचनिकी हत्या या च मानसी, सापि हत्येति मन्यमानैर्भवद्भिः काव्यार्थे याथार्थ्यमेव किन्नु दिदृक्ष्यत इति वेदितु न क्षमामहे। किमिति च न प्रतिषिध्यन्त इमे ये 'रत्नैः कल्पित-मासनमि'–त्यादिभिर्वचनैराशुतोषे भगवति मानसीमेव सपर्यामुपनीय पुमर्थानासादयन्ति। काव्यार्थस्य मानसत्वेनायथार्थत्वे कृतमेतेन महिम्नः–स्तुतिपाठादिना प्रयासेन। ननु 'मानसोऽपि न न भवत्यर्थः, किन्तु काव्ये पुनर्मानस एव स भवतीति यो भवतामन्ययोगव्यवच्छेदाग्रहस्तत्र वय विप्रतीपा' इति चेत् साधु, दृष्टा भवद्भिरस्माक दिगिति बध्नीमो धृति प्रतिपालयामहे च समय 'शेष कालेन पच्यत' इत्युक्त्या ॥१०८॥

अन्यत् सर्वं पतेत् कूपे वराका मिष्टविक्रयाः।
विना मूल्यं क्रयात् काव्यरसिकैर्हन्त वञ्चिताः ॥१०९॥

109 Let every thing go to hell. Alas ! poor sweet-merchants are lost. Their sweets would be bought without any charge by these enjoyers of poetry [ They will speak the word sweet and find it ready before them. And what is the use of marriage with this or that vital body. Love-poetry will be enough to provide the finest damsels ]

मिष्टविक्रया मिष्टवणिजः। काव्यार्थरूपेणैव यथार्थस्य मिष्टस्य लाभे को नु स्याद् विपरीतिधीः यो हि द्रव्य-व्ययेन मिष्ट क्रीणीयात्। कि बहुना काव्येनैव दमयन्तीप्रभृतीनामपि लाभात् को नु गुणो विवाहादिना प्रपञ्चेन। एव च निर्व्यवसाया वराकाः पौरोहित्योपजीविनः। कश्च विशेषो नलादीनामस्मत्। मूर्खाश्च सर्वेऽपि स्वयंवरयात्रिण शक्रादयश्च नलदूत्यप्रार्थिनः, काव्यमात्रेणैव तेषामपि निर्वृतेः सम्भवात्। ततश्च रिक्तं वचो यत् काव्यार्थः बाह्य इति ॥ १०९ ॥

यश्च प्रतीयमानत्वमर्थे साधयितुं श्रमः।
सर्वश्लाघ्यो भवेत् सोऽपि विपरीतार्थसाधकः ॥११०॥

110 The unanimous thesis of suggested-ness of the poetic meaning would be proved an antithesis [ if the poetic meaning is accepted as an objective one, whereas it is totolly subjective. ]

यदि च काव्ये बाह्य एवार्थः अर्थत्वेनेष्टस्तर्हि प्रतीयमानस्यार्थस्य व्यक्तमेव प्रत्यक्षायमाणत्वम्। नष्टं तर्हि तस्य प्रतीयमानत्वमेव। अन्यच्चैतद् यद् बाह्यवस्तु-सवादित्व नाम काव्यार्थानाम्। अत एव 'विकल्प'-रूपतामामनन्ति विद्वांसः शब्दोन्मीलितस्यार्थस्य 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प'[1] इति। ब्रुवते चास्य शब्दैकजन्यतामपि—

'विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः।
कार्यकारणता तेषा, नार्थं शब्दाः स्पृशन्त्यपी'।-ति[2]

तस्मादपूर्वेयं सृष्टिर्यदुत शब्दार्थो नाम। अत एव प्रमाणवद् विपर्ययोऽपि वृत्तिः विकल्पश्चोक्तस्वरूपः। तथा च योगशास्त्रे—

वृत्तयः पञ्चतय्यः, प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः'
[ योगसूत्र–१।५-६ ] इति।

तत्र विपर्ययलक्षणाय सूत्रम्—

'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' [ यो० सू० १।८ ]।—इति

अत्र वाचस्पतिः 'यज्ज्ञानप्रतिभासरूप तद्रूपाप्रतिष्ठमेव अतद्रूपप्रतिष्ठम्, यथा अ-श्राद्धभोजी-ति। अतः संशयोऽपि सगृहीतः। मिथ्याज्ञान सर्वजनीनानुभवसिद्धो बाधः। स चास्ति विपर्यये, न तु विकल्पे' इति। विकल्पश्च वस्तुशून्य इत्युक्त एव। अनयोर्योऽय विपर्ययः स प्रसिद्ध एव

१. योगसूत्रम् १।९।

२. शृङ्गारप्रकाशादिषु बहुश उद्धृतम्। द्रष्टव्योऽस्माक साहित्यसन्दर्भा इति ग्रन्थे भोजस्य ध्वनि-विचारो नाम सन्दर्भः।

कल्पितोपमादिषु, आरोपाध्यवसानानन्वयादिसाध्येष्वलकारेषु। अस्ति चैतत् सर्वम् अतद्रूपप्रतिष्ठत्वान्मिथ्याज्ञानरूपमेव। अस्ति च ततो वस्तुशून्यत्वाद् विकल्पानप्यनतीतम् ॥ ११० ॥

I. The poetic meaning is two-fold (i) Expressed and (ii) Suggested as DH. I 2 runs. For the latter one the term 'Pratīyamāna' is fixed and the term itself is a proof for the suuggested-ness of its meaning as its etymology goes as following—'Prati+i+m+āna'. Here the root 'i' stands for knowledge, particularly 'hidden one' in present context. Hence the term means—'the meaning which is being known even though no word or words are given in the poem for its expression or abhidhā.' If every poetic meaning is objective it would invariabily be present before the reader and then lose its word-meaning-ness having been subjected by their organs like eye One uses word to convey one's mental composition only when it falls un-convayable by other sourses 'ananyalabhyah śabdārthah'. By its objectiveness if the word meaning is visible how it is hidden or implicit. Now what is the use of this thesis ( of 'Pratīyamāna' meaning ) of the greatest rhetorician Ānandavardhana and his great followers like Abhinavagupta, Mammaṭa, Viśvanātha and others.

II 'Wordmeaning is suggested' is taken forgranted by Yoga philosophy also. There we find a term-'Vikalpa' which means 'a word-meaning without its outer existence and another term 'Viparyaya' which conveys—'word meaning just opposite to the outer one' [ Patañjali's Yogasūtra I. 5,6,8,49. ] [ K. 110 ]

अत एव ध्वनौ श्रीमान् कविरानन्दवर्धनः ।
कविं प्रजापतिं ब्रूते काव्य-विश्व-विनिर्मितौ ॥१११॥

111. This is why in his Dhvanyāloka the reverend poet Ānandavardhan ( 850 A. D. ) proclaims—'Poet is a creator of his 'own' world'. [own=imaginary. ]

उक्तमानन्दवर्धनेन—

अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥

शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥

भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ॥[1] इति ।

अत्र एवकारेण प्राकृतस्य प्रजापतेर्निरासः । तत्र च तन्त्रम् उक्तचरं[2] प्रौढोक्तिमात्रसिद्धार्थत्वम् । सति च प्रौढोक्तिमात्रसिद्धत्वे कीदृशं नाम बाह्यत्वमर्थस्य काव्यत्वेनाङ्गीचिकीर्षितस्य ॥ १११ ॥

At the and of DH. III 42-gloss ( page 250 Km. ) Ānandavardhana declares—'in the unlimited poetic world poet is the only Creator. His world changes as he wishes and 'Poet may treat conscious as unconscous and vice-versa'. [ K. 111 ]

---

१. ध्वन्यालोक ३।४२ कारिका-वृत्त्यन्ते परिकरश्लोकाः ।

२. अत्रैव १०४ कारिका-वृत्तिभ्याम् ।

अत एव च बौद्धेऽर्थे स्फोटाख्यस्य चिदात्मनः ।
शक्तिं स्वीकुर्वते प्राज्ञाः शाब्दिका न ध्वनौ पुनः ॥११२॥

112 And due to the same reason the wise grammarians say—'Subjective is the word and the meaning, which the former possesses power for, is also subjective. To them objective word is futile to express the meaning

a. Wise-grammarian=Nāgeśa In his 'Paramalaghu-mañjūṣā' he admits—'the sphota is the only means for the knowledge of word-meaning and sphota is but soul'. In his 'Vaiyākaraṇa-siddhānta-mañjūsa' he again puts stress on this point but, there-in, his mind is some how inconsistent In this ( latter marvellous thesis once he says—'the Nāda impressed on soul, is sphota and again he admits—'Parā is the Vāc which is but Brahman without any attribute' and supports his statement quoting the verse I. 1 and I 143 from VP.

b In cross exanination one does not find any utility of nāda if the soul itself is assumed as sphota

प्राज्ञाः शाब्दिका नागेशादय. । ते हि चिदेकरूपस्य स्फोटाख्यस्य शब्दस्य बौद्ध एव अर्थे शक्ति स्वीकुर्वते । तथा च

### स्फोटशक्तिवादः

१. 'ननु कस्तर्हि वृत्त्याश्रय. शब्द. ? स स्फोटात्मक इति गृहाण । कोऽय स्फोटः? उच्यते-चतुर्विधा हि वागस्ति परा पश्यन्ती मध्यमा वैखरी-ति । तत्र मूलाधारस्थपवनसस्कारीभूता मूलाधारस्था शब्द-ब्रह्मरूपिणी स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते । नाभिपर्य-न्तमागच्छता तेन वायुना अभिव्यक्ता मनोगोचरीभूता पश्यन्ती

वागुच्यते । एतद्द्वय वाग्ब्रह्म योगिना समाधौ निर्विकल्पकज्ञान-विषय इत्युच्यते । ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थ-वाचक-शब्द-स्फोट रूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मजपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते । तत आस्यपर्यन्तमागच्छता तेन वायुना ऊर्ध्वमाक्रमता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभि-व्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते । तत्र मध्यमानादोऽ-र्थवाचक-स्फोटात्मक-शब्दव्यञ्जकः । वैखरीनादो ध्वनिः सकल-जन-श्रोत्र-मात्रग्राह्यो भेर्यादिनादवन्निरर्थकः । मध्यमानादश्च सूक्ष्मतरः । कर्णपिधाने च जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपः स्फोट-व्यञ्जकश्च । तादृश-मध्यमा-नाद-व्यङ्ग्य· शब्दः स्फोटात्मकः ब्रह्मरूपो नित्यश्च ।

तदाह हरिः—

अनादिनिधन ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः-॥ इति ।

स च यद्यप्येकोऽखण्डश्च तथापि जपाकुसुमादिलौहित्यपीतत्वादि-व्यञ्जकोपरागवशात् लोहितः पीतः स्फटिक इति भानवद् वर्णादि-व्यङ्ग्यो वर्णरूपः पदरूपो वाक्यरूपश्च, यथा च मुखे मणि-कृपाण-दर्पणादि-व्यञ्जकोपाधिवशाद् दैर्घ्यवर्तुलत्वादिभान तद्वत् । किं च व्यञ्जक-ध्वनिगत कत्व-गत्वादिक स्फोटे भासते, बिम्बगत-धर्म-वैशिष्ट्येनैव प्रतिबिम्बस्य लोकेऽवधारणाद् व्यञ्जकरूपरूषितस्यैव स्फटिकादेर्भानाच्च । यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो, जीवाना च परस्परं भेदः, एव स्फोटे व्यञ्जकध्वनिगत-कत्व-गत्वादि-भानात् ककारो बुद्धो गकारो बुद्ध इत्यौपाधिको भेदव्यवहारः । अत्र उपाधिः कत्वादिर्भिन्नः, उपधेयस्तु आकाशस्फोटादिरेक एव । पद-वाक्ययो· सखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यः स्फोट एक एव । पूर्वपूर्व-वर्णस्तु तात्पर्यग्राहकः ।

अत्रेदं बोध्यम्–केनापि घटमानयेति वैखरीनादः प्रयुक्तः। स केनापि श्रोत्रेन्द्रियेण गृहीत'। स नाद इन्द्रियद्वारा हृद्गतः सन्नर्थबोधक शब्द स्वनिष्ठ-कत्वादिना व्यञ्जयति। तस्मादर्थं-बोधः। स च स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटः। उच्चा-रयितुस्तु युगपदेव मध्यमावैखरीभ्या नाद उत्पद्यते। तत्र वैखरीनादो वह्नौ फूत्कारादिवन्मध्यमानादोत्साहकः। मध्यमानादश्च स्फोट व्यञ्जयतीति शीघ्रमेव ततोऽर्थबोध., परस्य विलम्बेन, अनुभव-सिद्धत्वात्। तस्मादष्टविधस्फोटात्मकः शब्दो वृत्त्याश्रय.। वस्तुतस्तु वाक्यस्फोटो वाक्यजातिस्फोट एव वा वृत्त्याश्रयः, तत एव लोकेऽर्थं-बोधात्[१]। स्फोटस्याष्टमूर्तित्व चैवम्—१ वर्णस्फोटः, २. पदस्फोटः, ३. वाक्यस्फोट', ४ अखण्डपदस्फोट, ५. अखण्डवाक्यस्फोटः, ६ वर्ण-जाति-स्फोट., ७ पदजातिस्फोट, ८ वाक्यजातिस्फोटश्चेति। अष्टमूर्तित्व चेद वर्णाद्युपाधिभेदेन। वस्तुतस्त्वस्यैकरूपत्वमात्रमेवेति सर्वमान्यो राद्धान्त[२]–" इति,

२. तत्र स्फोटस्यास्य ब्रह्मरूपत्वादेव चिद्रूपत्वम्, ततश्चात्म-रूपत्वमपि, एकत्वं, ब्रह्मत्वमखण्डत्व चेति यत् सर्वं तस्याचिद्रूपे वस्तुन्यसभवात्।

यच्च नागेशेनैव 'प्रलये सर्वप्राणि-कर्मणामुपभोगेन प्रक्षयाल्लीन-सर्वंजगत्का माया चेतने ईश्वरे सुप्तेव तिष्ठति, कार्यप्रवृत्त्य-भावात्। तत' परमेश्वरस्य सिसृक्षा जायते। सा च माया-वृत्तिः। ततो बिन्दुरूपमव्यक्त त्रिगुण जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोरचिदशो बीजम्। चिदचिन्मिश्रोऽशो नादः। चिदशो बिन्दुरिति। अस्मात् बिन्दोर्वर्णादिविशेषरहित ज्ञानप्रधान सृष्ट्-युपयोग्यवस्थाविशेषरूपं चेतनमिश्र नादमात्रमुत्पद्यते। एतत् सर्वं-गतमपि प्राणिनां मूलाधारे विवक्षोः पुंस इच्छया जनितात् प्रयत्ना-

१. परमलघुमञ्जूषा, २. स्फोटवाद'।

च्चलितेन पवनेन व्यक्त शब्दब्रह्मरूपा 'परा वागि'-त्यभिधीयते। तदेव नादमात्र नाभिपर्यन्तमागच्छता पवनेन व्यक्तं मनोविषयः 'पश्यन्ती'-त्युच्यते । एतद् द्वयं सूक्ष्मतम-सूक्ष्मतरम् ईश्वराधिदैवत योगिनां समाधौ निर्विकल्प-सविकल्प-ज्ञानविषय इत्युच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्तं तत्तदर्थ-विशेष-तत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदेवत्या पर-श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा 'मध्यमा वाग्' इत्युच्यते। स्वकर्ण-पिधाने उपांशुशब्दप्रयोगे च श्रूयमाणा सा। एतदवस्थात्रय सूक्ष्मतम-सूक्ष्मतर-सूक्ष्म-प्रणव-रूपम्। सैव चास्यदेशमागच्छता तेन वायुना कण्ठदेशे गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता पर-श्रोत्रेणापि ग्रहणयोग्या विराडधिदेवत्या 'वैखरी वाग्' इत्युच्यते। प्रणव एव व्यानोदानाभ्या सह वैखरीरूप प्रतिपद्यते। तत्र मध्यमाया यो नादांश. तस्यैव स्फोटात्मनो वाचकत्वम्। स च यद्यप्येकोऽखण्ड एकैकवर्णेनाप्यभिव्यज्यते तथाप्यन्त्यवर्णाभिव्यक्तो बोधहेतु । तत्र च व्यञ्जक-रूप-प्रतिबिम्बनात् तद्रूपरूषितैव तदभिव्यक्तिरित्येकोऽपि नानात्वमिवापन्न '-इति[1]

स्फोटस्य चिदचिन्मिश्रत्वमुच्यते नादाभिन्नतामूरीकृत्य तत्रैव व्याख्ये-यम् 'मध्यमाया यो नादाश. स यदा स्फोटात्मतामापद्यते अर्थात् चिद-चिन्मिश्रता विहाय चिदेकरूपतामापद्यते तदा तत्र वाचकत्वम्' इति। अत एव महाभाष्यस्य 'कस्तर्हि शब्द:' इति प्रश्ने यत् 'येनोच्चारितेन सास्ना-लाङ्गूल-ककुद-खुर-विषाणिना सप्रत्यया भवति स शब्द:' इद-मुत्तर तत्र कैयटस्य 'वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति। वर्णाना प्रत्येक वाचकत्वे द्वितीयादिवर्णोच्चारणा-नर्थक्यप्रसगात्। आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात्, अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावात्, एकस्मृत्युपारूढानां

---

१. वैयाकरणसिद्धान्तलघुमञ्जूषा-सक्षेप:।

वाचकत्वे 'सर.' 'रस' इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात् तद्-व्यतिरिक्त स्फोटो नादाभिव्यङ्ग्य। वाचको विस्तरेण वाक्यपदीये व्यवस्थापित:' इति यो नादाभिव्यङ्ग्यत्व स्फोटस्य प्रतिपादयिता प्रदीप: तस्योद्योते[1] नागेशोऽपि तमेवानुसरन् 'नाद: वर्ण·' इति व्याचक्षाण. स्फोटस्य नादाभिव्यङ्ग्यतामेवाऽद्रियते।

वस्तुतस्तु स्फोटनिरूपणे येय वाचां स्वरूपनिरूपणप्रक्रिया तत् प्रौढिवादमात्रम्, न तु सम्प्रदायशुद्धम्। कथमिति चेद् भगवत्या. परायाः पवनसयोगवाचोयुक्तेरागमविरुद्धत्वात्। या हि परा सा परैव। नास्ति तस्या इतरसस्पर्शेनापरात्वम्। यथा चैतत् तत् परानिरूपणप्रसंगे प्रतिपादितचरमेवास्माभिः 'परायाः परमेश्वर्या' इतिकारिकाव्याख्याने। उच्यते च वैयाकरणशिरोमणिना तत्रभवता भर्तृहरिणापि 'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्' इति। स्वीकृत च नागेशेनापि परापरत्वमस्याः कारिकायाः परमलघुमञ्जूषायाम्। उच्यते चान्यदपि तेनैव भगवता हरिणा—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः पर पदम्॥[2] इति।

अत्र पर पदमिति यत् परत्वेनोच्यते कीदृश तस्य पवनमिश्रितत्वेन द्वैतम्। सत्या च द्वैतापत्त्या को नु गुणः शब्दस्य ब्रह्मत्वप्रतिपिपादयिषया। ब्रह्मणः सर्वविध-द्वैत-विवर्जितत्वात्।

३. या चैषा मध्यमाख्या वाक्, यश्च तत्र नादाश, तत्र पृच्छामः

[क] 'शुद्ध एवाय नादः स्फोटपदव्यपदेश्यः, वैखरीतुल्याऽश्रूयमाण-व्यक्ति-मिश्रितो वा। आद्ये को नु भेदस्तस्य बाह्यवायुजन्यात् स्वनात्। द्वितीये च य एकः स्वकर्णपिधाने श्रूयमाणः शुद्धः स्वनः यश्चापर उपाशु-

१. परमलघुमञ्जूषायामपि।

२. वाक्यपदीये १।१४४।

शब्द-प्रयोगे वर्णाभिव्यक्तिमयः सः, किं नु तयो. भेदकम् ? ननु वर्णाभिव्यक्तिरेव भेदिकेति चेत् तस्या एव कारण जीप्स्यते, न तु सा। आत्मानुगृहीतस्य मनसो विवक्षैव तदिति चेदात्मन एव तर्ह्यसौ महिमा यदसौ मनोऽनुगृह्णाति, अनुगृह्य च विवक्षानुगुणान् मध्यमाख्याञ्छब्दानुल्लिखति, उल्लिख्य च तान् विसिनोति, विसीय चासादयति श्रोत्रग्राह्यत्वेन वैखरीत्वम्। अखण्डत्वं विभुत्वं नित्यत्वमेकत्व चात्मन एव केवलस्य, न तु तदितरस्याऽचित॰। ततश्चाखण्डस्य नित्यस्य, विभोरेकस्य च स्फोटस्य केन वान्येन सहाभेद॰ ऋते चैतन्यविग्रहमात्मानम्। न च नादस्तादृश। तर्हि कीदृशं नु स्फोटत्व नादस्य। ननु यथा च देशान्तरस्थं भोग्य प्रति धर्माधर्माभिधयोरदृष्टयोः प्रयोजकत्वस्यान्यथानुपपत्त्या कार्याधिकरणे कारणस्य स्थितये धर्माद्यधिकरणस्यात्मनो विभुत्वमावश्यकम्, आवश्यकं चाविभुत्वमात्मावच्छेदकस्य शरीरस्य, अनुभवस्यानपलपनीयत्वात्, तथैव स्यान्नाम चिदचिन्मिश्रतारूपनादात्मनः स्फोटत्वम्, अव्याप्यवृत्तित्व च विभुत्वादीनामिति चेत् तर्हि केवलस्य नादस्यैव स्फोटत्वस्वीकृतौ का नु हानि॰। ननु नादस्योच्चरितप्रध्वस्तत्वात् समुदायासम्भवे वर्णसमुदायाज्जायमानाया अर्थाभिव्यक्तेरसम्भव एव हानिरिति चेद् भवन्मते तस्य किं नु समाधानम् ? स्फोटरूपस्य चिदचित्समुदायस्य यश्चिदंशः, आत्मरूपस्य तस्य विभुत्वान्नित्यत्वाच्च तत्र संस्काराधानेन, आनुपूर्व्या तदभिव्यञ्जनेन चास्ममन्ते तत्समाधानमिति चेदात्मनि संस्काराधानेनैव कार्यसिद्धे॰ कृतमेतेनान्यागमानभ्युपगतेन स्फोटाख्येन नूत्नतमेन तत्त्वेन। एवं चोपस्थिता स्फोटस्य चिदचिन्मिश्रतापक्षे मूलहानि। सोऽयं देवमेव विक्रीय सम्पद्यमानो देवस्य यात्रोत्सवः।

[ख] अन्यच्च किमिदं मध्यमानादगतमुपांशुत्वं नाम। मानसत्वमेव तदिति चेत् किमिद मानसत्वम्। ननु मनोविषयत्वमिति चेत् केवलं मन एव शब्दान् विसिनोति आत्मानुगृहीतं वा। मृतौ सुषुप्तौ च व्यभिचारा-

दात्मानुगृहीतमेव तत् तथेति चेदथापि चिदात्मा स्वात्मैव स्फोट इति परिशेष्यात् सिद्धम् ।

[ ग ] किं च वैखर्या निरर्थकत्वं ब्रुवाणानां भवता को न्वाशयः ? ननु वैखरी मध्यमामप्रबोध्य न प्रगल्भतेऽर्थप्रतिपादन इति मध्यमाया एव तत् सर्वं महत्त्वमिति चेदुच्यतां तर्हि स्थविष्ठस्यास्य भोगायतनस्य निरर्थकत्वम्, आत्मानं विना तस्य तत्ताया अप्रसिद्धेः । किं च मूलमार्यस्य भर्तृहरिणा सह विरोधस्य । को नु विरोध इति चेत् 'पराया अवाक्त्वमाकलयता तेन भगवता त्रय एव भेदा वाक्त्वेन गृहीताः 'पश्यन्ती, मध्यमा वैखरी'-ति । भवता च पराया अपि वाक्त्वमेवास्थितम् अवाक्त्वं च वैखर्याः । यथा चेद तद् भवतैवोद्धृतेन हरेरेव, 'वैखर्या मध्यमायाश्चे'-त्यनुपदमेवोद्धृतेन वचनेन 'एतत् व्याकरणम् । अनेकतीर्थेति, श्लिष्टव्यक्तवर्णरूपा, प्राप्तसाधुभावा, अपभ्रष्टा, दुन्दुभिवेणु-वीणादि-शब्द-रूपा चेत्यर्थ' इति भवतैव व्याख्यातेन । अस्ति चान्यदपि वचनं तत्रभवतो भर्तृहरेः । तथा हि—

द्वौ शब्दात्मानौ नित्यः कार्यश्च । तत्र कार्यो व्यावहारिकः पुरुषस्य वागात्मनः प्रतिबिम्बोपग्राही । नित्यस्तु सर्वव्यवहारयोनिः, सहृतक्रमः, सर्वेषामन्तःसंनिवेशी प्रभवो विकाराणाम्, आश्रयः कर्मणाम्, अधिष्ठानं सुखदुःखयोः, सर्वत्राप्रतिहत-कार्यशक्तिः घटादिनिरुद्ध इव प्रकाशः परिगृहीतभोगक्षेत्रावधिः, सर्वमूर्तीनामपरिणामा प्रकृतिः, सर्वत्र बोधरूपतया सर्वप्रभेदरूपतया च नित्यप्रवृत्त-प्रत्यवभास-स्वप्न-प्रबोधानुकारी प्रवृत्तिनिवृत्तिपदाभ्यां पर्जन्यवद् दावाग्निवच्च प्रसवोच्छेदशक्तियुतः सर्वेश्वरः, सर्वशक्तिः महान् शब्दवृषभ' इति[1] ।

ननु कोऽयं महान् वृषभो योऽत्र शब्द-शब्देन व्यपदिश्यते । ननु स एव य —

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो तथास्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥—इति

१ श्रीमद्-रामसुरेशाचार्यकृतौ संस्कृतव्याकरणदर्शनेऽपि तत्र पृ० ४६३ ।

भाष्यकारराजशेखरादिभिर्विविधं व्याख्यातया भगवत्या श्रुत्या प्रतिपिपादयिषितः। अभीप्सित तेन मुख्यतः शरीराद्यवच्छिन्नस्य भगवतो जीवात्मन एव प्रतिपादनम्। स च तीर्थकृद्भिस्तथा तथा व्याक्रियते, अतिशयोक्त्या प्रतिपाद्यस्यात्र निगीर्णत्वात्। स एव च भगवान् आत्मदेवः सर्वेश्वरः, सर्वशक्तिमत्तया चाङ्गीक्रियते शक्यते च तथाङ्गीकर्तुम्। को न्वत्र विश्वप्रपञ्चे तदन्यो यो ह्येवमुपश्लोक्येत, उपश्लोकश्चासौ भूतार्थ एव सिद्ध्येत्।

ननु शब्द एव य एवमुपश्लोक्यते, न सः स्फोट इति चेत्, मुकुलभट्टरीत्या लक्ष्यमर्थं प्रतिपादयन् वाचक एव यथा लक्षकतयापि व्यपदिश्यते, न तु ततो भिद्यते, तथैवात्रापि योऽयमात्मदेवरूपो महान् देव स एव स्फोटात्मनापि व्यपदिश्येत अर्थस्फोटनक्रियाश्रयतया। स्फोटन चाभिव्यक्तिः सा च ध्वन्याश्रिता। ध्वनिश्च तत्रोपाधिः। यथा चैतत् तत् परमलघुमञ्जूषाया भवद्भिरेव प्रकाशितम्। उद्धृत चास्माभिरनुपदमेव भवता तत् सर्वमपि दर्शनम्। आत्म–ध्वन्योर्मध्ये कश्चिदन्योऽप्येक शब्द इति तु कल्पनामात्रम्। अत एव निराकृतं स्फोटदर्शनमन्यै शास्त्रै।

[घ] अस्ति च विपर्यासोऽपि। कीदृश इति चेद् 'ध्वनिरेव व्यङ्ग्य, स्फोट एव व्यञ्जक' इति। उच्यते चैतदार्येण भगवता वाक्यपदीयकृतैव 'यः[1] सयोगविभागाभ्यामि'–त्यादि, तद्भाष्ये चाभिनवगुप्तेनापि[2]। यथैतत् तदनुपदोद्धृताभ्या तद्वचनाभ्यां स्पष्टमेव।

नासौ तस्य सिद्धान्तः, पूर्वपक्ष एष इति चेदास्ता नामैवम् संज्ञामात्र एष विवाद, न तु व्यङ्ग्यव्यञ्जकयो। स्फुरति ध्वनिरस्मादित्यस्या अपि व्युत्पत्तेरत्र सुखेन सभवात्। अत एव 'काव्यस्यात्मा ध्वनि-

---

१. वा० प० ११०२

२. ध्वन्यालोक–१।१३–वृत्तेः 'श्रूयमाणेषु' इति पदस्य लोचनम्। अत्रैव ११६ पृष्ठे पा० टि०

रि'ति ब्रुवाण आनन्दवर्धनोऽपि सगच्छते, ध्वनित्वेन प्रतीयमानस्याप्यर्थस्य तेन ग्रहणात् । वाचकस्य शब्दस्य तत्र प्रत्यायकत्वे स्फोटस्यैव व्यञ्जकत्वमत्र परिणतम् व्याकरणदर्शनेऽनुपदोक्तेन न्यायेन स्फोटस्यैव वाचकत्वेनाङ्गीकारात् । इदन्त्वत्र विप्रतिपत्तिपद यत् स्फोटः ध्वनिश्चेत्युभयमपि बाह्यमेव, नास्ति च चैतन्य विना क्षेम इति पक्षेऽप्यवश्यमेवावधेयम् । यच्च चैतन्य तस्यैवासौ महिमा यदत्र कश्चिद् व्यञ्जकः, कश्चिच्च व्यङ्ग्य इति । अत एव चात्मरूपो रस एव ध्वनिरिति प्रायोवाद आलकारिकाणाम् । काव्यात्मत्वमपि ते तत्रैव केवले दिदृक्षन्ते ।

ननु 'अस्ति सवादः स्फोटस्य नादत्वमभिब्रुवाणानामस्माकमागमैः—

सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः ॥
परशक्तिमय. साक्षात् त्रिधासौ भिद्यते पुनः ।
बिन्दुर् नादौ बीजमिति तस्य भेदाः समीरिताः ॥
बिन्दुः शिवात्मको बीज शक्तिर् नादस्तयोर्मिथः ।
समवाय· समाख्यातः सर्वागम—विशारदैः ॥
भिद्यमानात् पराद् बिन्दोरव्यक्तात्मा ततोऽभवत् ।
शब्दब्रह्मेति तं प्राहु· सर्वागमविशारदा· ॥ इति[1] ।

अस्ति चात्रान्योऽप्येको बिन्दुर्योऽसौ प्रथम त्रिगुणात्मकत्वेनाव्यक्तत्वेन च निरूपित । तत्राप्यागम·—

कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।
स्थूल-सूक्ष्म-परत्वेन तस्य त्रैविध्यमिष्यते ॥
स बिन्दु-नाद-बीजत्व-भेदेन च निगद्यते । इति[2] ।

---

१. वैयाकरणसिद्धान्तलघुमञ्जूषाया रत्नप्रभाख्याया व्याख्याया। वि० स० १९८६ प्रकाशिते सस्करणे १४५ पृ० ।

२. तत्रैव १४६ पृ० ।

बिन्दोस्तस्माद् भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत्।
स एव श्रुतिसम्पन्नै शब्द-ब्रह्मेति गीयते ॥

इति चे[1]ति कान्वनुपपत्ति नादस्य स्फोटतायामिति चेद्—

आगमैरविरोधेऽपि मध्यमानादाभिव्यङ्ग्यत्व प्रतिपादयतु॰ स्वसन्दर्भेण[2] तु विरोधः स्फुट एव। अभिव्यङ्ग्यस्याभिव्यञ्जकभिन्नत्वे सर्ववादिसम्प्रतिपत्तेः। न हि य एव दीपः स एव तदभिव्यङ्ग्यो घटादिरर्थः। अस्ति च भवता द्विजिह्वत्वम्, एकत्र मध्यमानादात्मकत्वम्, अपरत्र च तदभिव्यङ्ग्यत्व स्फोटस्य प्रतिपादितवताम्। आगमा अपि भवता विचित्रा एव यत्र जडाच्चित उत्पत्ति। कथमिति चेत् प्रथमो बिन्दुस्त्रिगुणात्मा अव्यक्तश्च, द्वितीयश्च स चिन्मयः। एव हि स्फुटमेव प्रथमस्य जडत्वम्, अपरस्य च चेतनत्वम्। यद्धि त्रिगुणात्मक तज्जडमेवेति सख्यावतां केषा न प्रतिपत्ति.। तत्रैव च चरितार्थं अव्यक्तशब्दोऽपि। चिदात्मन. स्वयप्रकाशस्याव्यक्तत्वासम्भवात्। ननु जडे चेतनप्रतिबिम्बमेव चित्त्वेन प्रतिपिपादयिषितमिति चेत् सेय काव्यकथा, न तु शास्त्रचर्चा। जीवतो मनुष्यस्य प्रतिबिम्बस्य जडात्मकत्वमेव, न चिदात्मकत्वमिति केषा नानुभूति॰? अतएव प्रतिबिम्बान्युपाधिभेदेन भिद्यन्ते, एकस्यैव सुधाशो. वेशन्तशते शत प्रतिबिम्बानीति सर्वजनीनमेव। ननु प्रतिबिम्बानि जलाद्युपाध्यपगमे बिम्ब एव लीयन्त इति वेदान्ताः। अस्त्येवमेतेषा बिम्बप्रतिबिम्बानामभेद एव, न तु भेद इति चेत् पारिभाषिकमेव तत्, न पारमार्थिकम्। सति तु पारमार्थिके असत्यपि विष्णुपदे शीतरश्मौ स्यान्नाम वेशन्तादिषु तस्य प्रतिबिम्बलाभ.। न च भवति। किमत्र मूलम्, जलात् प्रतिबिम्बस्य भेद प्रविहाय। न च भवति बिम्बेनाभेदः, एकत्वावच्छिन्नेन बहुत्वावच्छिन्नाभेदस्याप्रसिद्धेः,

---

१. लघुमञ्जूषा।

२. तत्रैव १४५ पृ० मूले।

अप्रसिद्धेश्च प्रातिभासिकस्य पारमार्थिकेन सहाभेदस्य। प्रातिभासिकमेवेद यत् प्रतिबिम्ब नाम। अस्ति च प्रतिबिम्बाना बिम्बैः वैयधिकरण्यम्। यथैतत् तच्छायाग्राहिकया[1] गृहीतेभ्य· प्रतिबिम्बेभ्यः स्पष्टमेव। अनेकानि हि तानि। एकश्च तेषामालम्बनात्मा विषयः। अत एवच्छायाग्राहकापण[2] गत्वाऽस्मदादिभिरुच्यते 'चित्र मे गृहाण सुन्दर चेद् भविष्यति दश प्रतीरस्य क्रेष्यामी'–ति।

अयमेव नागेशादीना वैयाकरणाना रेखागवयन्याय आलङ्कारिक-प्रसिद्ध-चित्रतुरगन्याय[3]-सहयुध्वा। एतेन स्पष्टमेवाचितश्चित्त्वप्रतिपित्साया अव्यावहारिकत्वम्, युक्तिविपरीतत्वम्, विचारासहत्वम्, ततश्च सर्वाकार प्रत्याख्येयत्वम्।

आनन्दवर्धनाचार्यैरङ्गीकृतध्वनिभिरप्यनुल्लिखित-नामा[4] सोऽयं स्फोटोऽस्माभिरत्र लेशेन विचारित·। अत्र हि भर्तृहरिरेव परमं प्रमाणम्। ततश्च चेतनत्व चिदात्मकत्वमेव च स्फोटस्यास्य स्थिरम्।

अय स्फोट एव च शक्त्याश्रय इति नागेश। 'व्यञ्जक–रूप–रूषितस्य स्फोटस्यैव अर्थे सकेतग्रह' इति तदुक्तेः।[5]

एव च चिदात्मकतया स्फोटरूपस्यापि शब्दस्य अयत्नसिद्धमेव ज्ञानरूपत्वम्।

---

१. छायाग्राहिका 'कैमरा'–पदवाच्या।

२. 'स्टूडियो'–पदवाच्यम्।

३. शङ्कुकस्य रसनिष्पत्तिप्रक्रिया।

४. करिका–वृत्त्यात्मके सपूर्णेऽपि ध्वन्यालोके स्फोट-शब्दोऽस्माभिर्न लब्ध·।

५. वैयाकरणसिद्धान्तमञ्जूषाया १५१ पृष्ठे।

यश्चायमर्थः सोऽपि वाङ्मये बौद्धत्वेनैव महर्षिषु महामतिषु च स्थितः। अत्र—

*प्रतिज्ञा*—

'शक्योऽर्थोऽपि बुद्धिसत्तासमाविष्ट एव, न तु बाह्य-सत्त्वाविष्ट' इति।[1]

*युक्तयश्च*—

१. सत्ताभिलापापौनरुक्त्यम् : तथा हि घटसत्तायाः प्रत्यक्षेणैवोपलब्धौ 'घटोऽस्ति' इति व्याहारे 'सत्ताऽभिलापकस्य 'अस्ति'-शब्दस्य, 'न सत्ता पदार्थो बुद्धिस्थो व्यभिचरतो'-[५. २. ९४] तीति पौनरुक्त्यापत्तिः। योऽय बुद्धिस्थो घटः स बहिरप्यस्तीति प्रतिपत्तेः घटस्य बौद्धत्वे पुनरदोषः।

२. अभावाभिख्योपपत्तिः : 'न सत्ता पदार्थो व्यभिचरती'-त्युक्तादेव भाष्यवचनात् सत्ताया अव्यभिचारे 'घटो नास्ती'ति प्रयोगस्योपप्लवप्रसक्तिः। बुद्धिसत. पुनर्बाह्यत्व-प्रत्याख्यानाय तूक्तौ नोपप्लवः। एवमेव 'शशशृङ्ग नास्ती'-त्यसतोऽप्यर्थस्याभावाभिख्याने नोपप्लवः, बाह्यसत्त्वाभावेऽपि बुद्धिसत्त्वस्याभावाभिख्याने दोषाभावात्।

३ व्यवहारोपपत्तिः : उतचरस्य हि पटत्वेन व्यपदेशो न पुनरनुतस्य। ततश्च 'पट वये'-त्यादिषु प्रयोगेषु पटादीनां बुद्धिस्थत्वं विना नोपपद्यते व्यवहारः।

---

१. वैयाकरणसिद्धान्तमञ्जूषाया ३८ पृष्ठे।

**४ समानाधिकरण्य–सिद्धिः** : कार्यं प्रति कर्तुरिच्छाया अपि कारणत्वे न स्यात् सामानाधिकरण्यं बाह्येन विषयेण सहान्तःकरणैकनिष्ठाया इच्छाया । बौद्धत्वे पुनर्नानुपपत्तिः, अन्तःकरणस्यैव हि बुद्धयधिकरणत्वेनाभ्युपगते । भवति चावश्यक कार्यकारणयोः सामानाधिकरण्यम्, इतरथा अचक्रस्थितस्यापि मृत्पिण्डस्य स्यादेवाभ्युपगमश्चक्रगतत्वेनोत्पन्न घट प्रति कारणत्वेन।

**५. भ्रमोपपत्तिः** : भ्रम-स्थले हि यन्निरूपिताधिष्ठानत्व रज्ज्वादीनां सर्पादयस्ते नियतमेव बौद्धा, अत एव तेषामुत्तरे क्षणे बाध । व्याख्याता एतेन चित्रम्, कथा, नाटयम्, मूर्तिश्चेति प्रतिभासमात्रजीवातव सर्वा अपि कलाः। तथा हि चित्रेषु उद्गूर्णा निपतिताश्च प्रहारा दृश्यन्ते कसस्य कृष्णस्य च। ग्रन्थिकेष्वपि शब्द–ग्रन्थ–गड्डु–मात्र लक्ष्यते । कथा हि ग्रन्थ , श्रोतृ–समुदायश्च गड्डु । तत्र हि बुद्धिविषयाणामेव विषयाणामुत्पत्ति-समृद्धीरेते व्याचक्षते, न तु वस्तु–सताम् । नाटयप्रयोगेषु हि केचित् काल–मुखा भवन्ति केचिच्च रक्तमुखा. । चेष्टन्ते च तथा तथा कसादिरूपेण । चित्र–तुरग–न्यायेन च तद्भिन्नानामप्येतेषा तत्त्वेन ग्रहः। अत्र बौद्धत्वमेवानुकार्याणाम् । तदिदमुक्तम् 'अतीतानागते'त्यादिना कारिकाग्रन्थेनापि । एवमेवाख्यानेष्वपि । आख्यान कथा । तद्गता अप्यर्था प्रातिभासिका एवेति 'आख्यान-

कृतस्तदाचष्टे' इति वार्तिकेन तद्भाष्येण च स्पष्टभूयिष्ठमेव।

**६. उपदेशाद्युपपत्तिः** : तथाहि "अ-गोज्ञाय कश्चित् गा सक्थिनि कर्णे वा गृहीत्वा उपदिशति-'अय गौरि'-ति। अत्रोपदेश इति कोऽर्थः। इदमेव यत् सकेत-ग्रहण नाम। ग्रहणं च ज्ञानम्। आदिपदेन 'उद्देशः, प्रत्यभिज्ञा' चेत्यनयोः सग्रहः। तथाहि गुणैः प्रापणमुद्देशः। यथा काशीस्थः पाटलिपुत्रस्थ देवदत्तमुद्दिशति 'अङ्गदी, कुण्डली, किरीटी, व्यूढोरस्को वृत्तबाहुर्लोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्त' इति। गृहीतोपदेशः पाटलिपुत्रे देवदत्त दृष्ट्वा विमृशति 'अयमेव स देवदत्तो यस्य लक्षणानि काश्यामहमश्रौषमि'—ति। सेय प्रत्यभिज्ञा। अत्रोभयत्र 'ईदृश'-पदेन 'यत्तत्'-पदाभ्या च बुद्धिस्थ एव देवदत्तः परामृश्यते[1]।

**७. अभिप्रायोपपत्तिः** : अत्र प्रयोगाः 'ईदृशौ वध्र्यौ कुरु ईदृशौ च पुटकौ, उज्जयिन्याः प्रस्थितो माहिष्मत्या सूर्यमुद्गमयते' इति। अत्र 'इदमा' 'णिचा' च अभिप्राय एव विसीयते। पुटकवध्र्यो. बुद्धिस्थ—तदुभय—प्रतियोगिक—सादृश्यानुयोगितेवात्र विवक्षिता। परत्र चोद्गमयत इति कोऽर्थः, 'उद्गमनमभिप्रैती'-त्येव। प्रस्थितमात्र एव सूर्योद्गमनमभिप्रैतीति नाबुद्धि-

---

१. उपदेशेऽजनुनासिक इत् १।३।२ इति सूत्रस्य भाष्ये।

स्थमसौ विसिनोति, सूर्योद्गमनस्य काला-न्तरभावित्वात् ।

८. त्रैकाल्योपपत्तिः : श्रुताख्यानो दृष्टप्रयोगादिर्वा चिरहत कस-मुद्दिश्य जन कथयति 'कस घातयती'-ति,[1] 'गच्छ हन्यते कस' इति, गच्छ घानिष्यते कस' इति, कि गतेन, हतः कस' इति च । कोऽर्थ. ? ये तावदेते शौभिका नाम, एते हि प्रत्यक्ष कस घातयन्ति प्रयोगेषु । तदाश्रिता एवैते त्रैकालिका: व्याहारा. । अत एव च 'गोम नस्ती'-तिवदेव 'गोमानासीदि'-ति, गोमान् भविते'-ति च प्रयोगावुपपद्येते 'अस्ती'-तिधात्वर्थभूताया. सत्ताया एव सम्बन्धस्यात्र विवक्षितत्वात् ।

९. जात-जननाप्रसक्तिः : उच्यते 'अङ्कुरो जायत' इति[2] । कोऽयमङ्कुरो योऽत्र जननरूप प्रागभावप्रतियोगित्वमश्नुते, अश्नुते च जनिक्रियाकर्तृत्वम् । असतः कर्तृत्व व्यवहारविरुद्धम्, प्रतियोगित्व च तादृशम् । तस्मात् बुद्धिस्थ एवासावङ्कुरो यस्तथा तथोदाह्रियते । अन्यथा तु जातस्यैव पुनर्जनन प्रसज्येत । किं च अभावज्ञान प्रति प्रतियोगिनः ज्ञान कारणमिति सार्वजनीनम् । ततश्च 'नोत्पन्नो घटः, विनष्टो घट' इत्यादिषु व्याहारेषु कोऽयं घटो य एवमुच्यते । न शक्यते वर्तमानकालाव-

---

१. 'कुर्वतः प्रयोजकस्य' इति वार्तिकस्य भाष्ये ।

२. महाभाष्यप्रदीपोद्योत मञ्जूषासु व्याकीर्णा इमे विषयास्तत्र तत्र ।

च्छिन्नः स इति च वक्तुम्, उत्पत्त्यभावप्रध्वसाभ्या वर्त्तमानताया अस्यापहस्तितत्वात्। अत एव भगवान् गौतमः-'बुद्धिसिद्ध तु न तदसदि'-ति सूत्रयते। उद्धरति च त तथैव तत्रभवान् भामतीकारः '[1]चेतनो हि बुद्धावालिख्य नाम-रूपे घट इति नाम्ना रूपेण च कम्बु ग्रीवादिना बाह्यं घटं निष्पादयति। अत एव निर्वर्त्त्यमानस्यापि घटस्यान्त.सकल्पात्मना सिद्धस्य कर्मकारकभावः 'घट करोती'-ति। यदाहुः—'बुद्धिसिद्धं तु न तदसत्'-इति। सम्वादिज्ञाने पुनरिद बुद्धिस्थमेव कार्यं बाह्ये घटादिरूपिणि कार्ये आरोपयति, न तु बहिःस्थितं कार्यमेव प्रतिबिम्ब-विधया बुद्धिमारोहयती'-ति।

भगवान् भर्तृहरिरपि साधनमुद्देशे साधनस्य सामर्थ्यपरत्वमादाय बौद्धत्वमेवोपपादयते। तथाहि—

स्वाश्रये समवेताना तद्वदेवाऽऽश्रयान्तरे।
क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधन विदु ॥
शक्तिमात्रा-समूहस्य विश्वस्यानेक-धर्मणः।
सर्वदा सर्वथा भावात् क्वचित् किञ्चिद् विवक्ष्यते ॥
साधन-व्यवहारश्च बुद्ध्यवस्थानिबन्धनः।
सन्नसन् वार्थरूपेण भेदो बुद्ध्या प्रकल्प्यते ॥
शब्दोपहित-रूपास्तान् बुद्धेर्विषयता गतान्।
प्रत्यक्षामिव कसादीन् साधनत्वेन मन्यते ॥→

---

१. जन्माद्यस्य यत इति सूत्रभाष्यभामत्याम्।

बुद्धि–प्रवृत्ति-रूप च समारोप्याभिधातृभि ।
अथषु शक्तिभेदाना क्रियते परिकल्पना ॥
व्यक्तौ पदार्थे शब्दादे-जन्यमानस्य कमण ।
साधनत्व तथा सिद्ध बुद्धि-रूप-प्रकल्पितम् ॥ १-७ ॥

अस्ति च धर्मशास्त्रमप्यत्रानुगुणम् । तथाहि भगवान् मनुः—

सर्वेषा स तु नामानि कर्माणि च पृथक्-पृथक् ।
वेदशब्देभ्य एवादौ पृथक् सस्थाश्च निममे ॥[१]

इति 'स भूरिति व्याहरद् भुवमसृजद्'–ति प्रमाणीकृत्य भ्वादि-व्याहरणकाले तदर्थस्य प्रागभावप्रतियोगित्व बौद्धत्वेनैव परिहरति, तदानी भ्वादीनामर्थाना बाह्यत्वेनाविद्यमानत्वात् ।

इत्थमुपापादि शब्दः अर्थश्चेति द्वितयस्यापि सर्वाकार बौद्धत्वमेव काव्यकलायामपि । उपपन्न च ततः काव्यस्यापि बौद्धत्व, विज्ञानात्मत्वं ज्ञानरूपत्व वा निर्व्यभिचार निरर्गल च[२] ॥ ११२ ॥

I. According to Indian grammarians—'for articulation of word, the soul, acompanied with intellect, inspires speaker's mind The mind inspires the fire existent in body. This fire forces the wind called Prāṇa The wind arises and blows upon the inner portion of head and returns back to the mouth-cave or vocal-apparatus. Here with help of the relavant parts of vocal apparatus

---

१. मनुस्मृ० १.२१ ।

२. प्रपञ्चस्य मिथ्यात्वमादाय

मृगतृष्णायामुदक शुक्तौ रजत भुजङ्गमो रज्ज्वाम् ।
तैमिरिक-चन्द्र युग-वद् भ्रान्त कृत्स्नं जगद्रूपम् ॥

इत्यादि यदुद्गीयते मायावादिभिस्तदस्माभि काव्यकलायामविषयतया पर्यहारि । वक्ष्यते यदुतासम्बद्ध एष प्रश्नः 'काव्ये सत्यं वा बाह्य विश्वमसत्यं वे'–ति ।

it gives birth to the articulation and converts into words, sentences and the long or short speeches '—In this process who does play the part of a guid? Undoubtedly it is Soul. Then why sould one not accept the Soul only as 'the conveyer of meanings' i.e. Sphota

II. Nāgeśa neglects utterance i e. Vaikharī Vāc and gives importance to the 'mental Vāc' i e Madhyamā, only because the latter is consistent whereas the former one is inconcistent This difference is also the work of Soul. Then, why should Nāgeśa not confess the total importance of soul and proclaim the Nāda as an attribute to the soul, all subjective and 'Word'.

III. Nāgeśa's sphota is one in number, allpervasive in nature and lies beyond the reach of ears Can nāda be admitted of this character ?

IV. Do we feel any utterance=Nāda in our mind or intellect when we go on thinking without using our vocal apparatus and having any noise creates thereby ? If not the intellect it will suffice to enable soul to reveal the cycle of meanings and will not shout for any help from the utterance Here either of two, intellect and soul or both of them would be called word and as both of them are subjective alone, word will also be accepted subjective alone.

b. For the subjectiveness of meaning Nāgeśa quotes numerous authorities. Some of them—

1. Patañjali's Mahābhaṣya on V. 2 94, I. 3.2, III. 1 26 and Kaiyaṭas commentary there-on.

ii. Gautama's Nyāyadarśana IV. 150.

iii. Vācaspati Miśra's Bhāmatī on I. 1 2.

iv. Paramārthasāra a work on the Māyā-school of Vedānta-philoshophy, according to which the visible univesre had, has and will have no existence at all like the illusory serpent in rope lying in dim-light. One may remember the Vijñānavāda, a Buddist school of philosophy, which rejects objectivity of every thing and accepts the subjectivity alone thereof [ See my Karikā 53 under the Karikā 125 ]

Following is the substence of the arguments of the above authorities--

I, One says 'weave the fabric' or 'make a jar'. Here fabric and jar are subjective alone as the objectivity will reach them only after they are weaven or made

II. In staging of dramas one becomes Kamsa or Rāvaṇa ( or Saesar ) and other Kṛṣṇa Rāma ( or Casca ). Due to their makeup we accept their identity with Kamsa and others, enjoy their performances well expressing our feeings as-'Oh !

(a) Kamsa ( or Saesar ) is being slain,

(b) Kamsa ( or Saesar ) will be slain and

(c) Kamsa ( or Saesar ) is slain, etc.

Here Kamsa and Kṛṣṇa ( or Saesar and Casca ) are not present today in their objective forms. They are the persons of past, yet they are being treated as subject of present and future Of what kind their existence is ? Of course, subjective only.

III. One, residing at Mathurā asks 'Let me know what are the characteristics of Devadatta who lives in Pataliputra' He is informed 'well, one who is decorated with crest on head, rings in ears, clad in multicoloured garments, high-nosed, strong-souldered, red-eyed, bold-chested and muscular-armed. So-looking is Devadatta' Here what denotes the word 'So-looking'? Kaiyata answers it indicates the person who is borne in speaker's mind or who is subjective only'.

IV. So is the case with story-narrators They too slay or give birth to the characters who are not present but existing in stories only.

V. One says 'this town was, is or will be full of cows' What kind of existence of relation between the cows and the town appears here? Is it of past or of future or has it its present-ness? Answer is clear The past and fature are lying in the womb of present, because the cows are in speaker's mind which is subjective only. And finally following is the judgement of Ācārya—'things never give up their existence, as, they reamain in mind all the time'.

or

—'Nothing is lost, because it remains ever existent in mind'.[1]

---

1.—'Nahi sattām padārtho vyabhicarati'V, 2.94. MB.
—'Buddhi-siddham tu na tadasat IV. 1.50. ND.
—'VP. 1–7 Sādhana-samuddeśa.

तमिममर्थं निजिगमिषयिषवो कारिकान्तरमुपस्थापयामः—

**सिद्धमेतेन शब्दार्थ-द्वन्द्वं ज्ञानैक-रूपताम् ।**
**अपि वाङ्मयमात्रेऽपि धत्ते काव्यस्य का कथा ॥११३॥**

113. Thus it is proved that not in only poetry, but in the entire literature 'word' and its 'meaning' both are but 'subjective. After stabilishing the subjectivity of meaning, there come out the following further arguments in support of the subjectivity of the thing called 'word'—

वाङ्मयमात्रेऽपीति शब्दशास्त्रादिष्वपीत्यर्थः ॥ ११३ ॥

### शब्दशक्ति-प्रत्याख्यानम्

काव्ये शब्दोऽर्थश्चेत्युभयोः बौद्धत्व ज्ञानैकरूपतारूप प्रसाध्य भूयोऽपि तत्र युक्त्यन्तरमुपतिष्ठापयिषवो ब्रूमः—

**'शब्दोऽर्थ-ज्ञानसूः शक्त्या' यदि, तत्र निरीक्ष्यताम् ।**
**सामानाधिकरण्यं किं वर्तते हेतुकार्ययोः ॥११४॥**
**मृत्स्ना चक्रस्थिता सूते चक्र एव घटं यतः ।**
**ज्ञानं त्वात्मनि चित्ते वा शब्दश्चाकाशगो मतः ॥११५॥**

114. a. If we admit the theory—'word itself (and not its knowledge) produces the knowledge of its meaning with help of its own power'—then the universal theory—'cause always produces its result in its own substratum'—fails, because an earthen thud produces a jar on the wheel only the thud itself lies whereupon.

115. b. (But) the Knowledge dwells in the soul or in the mind whereas the word is accepted to be living (some

where else like in ) sky only [ And, therofore, the substratums of both 'cause and result' are different and they do not have same-ness. ]

द्विविधो हि कार्यकारणभावो लोके विख्यात· जन्यजनकभावरूपो ज्ञाप्यज्ञापकभावरूपश्चेति। तत्र योऽय शब्दो यश्चार्थस्तयो· पर एव सः, न पूर्व। ज्ञाप्यज्ञापकभावश्च ज्ञानैकसार:। नहि शब्दोऽर्थशरीर प्रसूते, तज्ज्ञानमात्र प्रसूत इति हि सर्वजनीनम्। अस्ति च कार्यकारणयो· सामानाधिकरण्यनियमः, "कार्याधिकरणे कार्योत्पत्तेः प्राक्क्षणावच्छेदेन विद्यमानस्यानन्यथासिद्धस्यैवार्थस्य" कारणत्वेनाङ्गीकृतेः ॥ ११४ ॥

तत्र दृष्टान्त· मृत्तिकापिण्ड घटश्च। मृत्तिका हि यत्र चक्रे तिष्ठति तत्रैव घट प्रसूते, नान्यत्र। अदृष्टमपि तत्रैवात्मनि जन्यते यत्र यजमानत्वमवतिष्ठते। न हि काशीस्थित· कुविन्दः पाटलिपुत्रस्थिते वेमनि सूत्रव्यूहे वा पटमुत्पादयेत, न वोज्जयिनीस्थश्चित्रकर: काशीस्थिताया भित्तौ चित्रमालिखेत्। ततश्च स्थितमेतत् कार्यं कारणाधिकरण एवावाप्तोत्पत्तिकमिति। अय हि स्वभाव एव कार्यकारणयोर्यदिमे समानाधिकरणे एव भवतो, नान्यथा। स चासावनयो: स्वभावोऽत्र व्यभिचरति शब्दस्य शरीरेण सह अर्थज्ञानस्य कार्यकारणभावस्याङ्गीकृतेः। शब्दो हि नभोमात्रवृत्तिरिति दार्शनिकाना प्रायोवाद·, ज्ञान च न नभोवृत्ति। तद्धि ज्ञातुरात्मनि वा तिष्ठति, चित्ते वा। भिन्नश्चात्मा नभसः, न च चित्तमप्यभिन्न तेन। एव हि प्राज्ञा इमे खड्गहस्ता प्रजापतिविधानस्य प्रतिविधानाय। असदृश च तद् दार्शनिकेभ्य इति शब्दस्य शरीरं विहाय तस्य ज्ञानेनैव सहार्थज्ञानस्य कार्यकारणभावोऽभ्युपेयः। सिध्यतितमा ततः तादृशस्य ज्ञानद्वयस्य सामानाधिकरण्यनियमः, नास्ति च व्यभिचारशङ्कापि कार्यकारणभावस्वभावशरीरे ॥ ११५ ॥

एवं शब्दस्य यज्ज्ञानं शुभा तत्रैव शक्तता ।
अन्वय-व्यतिरेकौ च विद्येते तत्र केवलम् ॥११६॥

तथाहि

शब्दे सत्यपि तज्ज्ञानाभावे नार्थस्य धीर्भवेत् ।
'रुचिङ्कुर्वि'-ति वाक्ये च शब्दभ्रान्त्याऽपि सेष्यते ॥११७॥

116. Therefore, the knowledge of word, is the only substratum of word-power [ for the knowledge of meaning ] because it is this only which bears the invariable co-existence ( anvaya ) and the invariable non-co-existence ( vyabhicāra ). To make the point clear we may examine that ·

117. The presence of word alone does not suffice to produce the knowledge of meaning if the knowledge of word is absent, no matter the knowledge ( of word ) be an illusion only, as in the sentence 'Rucinkuru', wnere the uncalledfor word 'cinku' reveals itself and brings an unexpected filthy meaning to the reader's mind

शक्तता शक्तिर्वक्ष्यमाणस्वरूपा शब्दशक्तिरिति यावत् । अन्वयः सद्भावसाहचर्यम्, व्यतिरेकश्चासद्भावसाहचर्यम् । सा अर्थधी· ॥ ११६ ॥

इष्यते कश्मीराभिजनैः काव्यप्रकाशकारादिभि, चिङ्कु-शब्दस्य अश्लीलार्थकत्वम्, योन्यन्तरालवर्त्युच्छूनाङ्कुरपरतया तेषु प्रसिद्धे· । नास्ति च शब्द एष कविविवक्षित·, शब्दद्वय-चरमप्रथमार्धयोगादेव तस्य स्फूर्तेः । अस्ति चात्र सम्धिर्वैकल्पिकः । ततश्च चिङ्कुपदस्फूर्त्तिरपि तथा । अस्फूर्त्तौ तु नास्ति सम्भवस्तादृग्विधस्याश्लीलार्थप्रसरस्य । एव प्रसर एष प्रातिभासिक-पद-जन्योपस्थितिमात्रविषयः । प्रातिभासिकत्व च बुद्धिमात्रस्थितत्वमेवेति कृतं बहीरूपस्य शब्दस्यार्थज्ञानेन सह कार्यकारणभावाभिनिवेशेन अनभिप्रेतपदज्ञानार्थबोधस्थले व्यतिरेकव्यभिचारस्य दर्शनात् ॥ ११७ ॥

The word 'Cinku' belongs to the Kaśmīrian dialect of 1200 A D [ KP illus verse 213 ] meaning the elevated middle portion of vagina If the poet were conscious he would have arranged the words other wise like 'Kuru rucim ' Here the word 'cinku' is illusive and has no real existence like the snake in must-covered rope, still it exists ( in our mind ) and enables us to pick up the particular sense. What is the nature of its existence ? Exclusively subjective No doubt here word-knowledge exists, though its expressive is absent in its objective form. What conclusion would be drawn out of it ? Absolutely only one that 'the knowledge of word is the cause of the knowledge of meaning.' And consequently it is a game of two knowledges only that we find in literature and not of the objective word and objective meaning themselves Hence one should proclaim the literature as subjective alone [ K. 117 ]

### शब्दशक्तेर्बौद्धत्वम्

प्रसङ्गपतितत्वेन 'शक्तेरधिकरणं शब्दस्य ज्ञानं, न तु शरीरम्. अतः सापि ज्ञानैकरूपे'-ति धियोच्यते—

'अस्मादेतस्य बोधः स्य दि'-ति शक्तिरपि स्वतः ।
शब्दार्थबोधयोः संविद्ग्रन्थिर्, बोधात्मकः स च ॥११८॥

अत्र युक्ति —

शक्तिर् ज्ञाने, चितौ ज्ञानं, सा न शब्दस्, ततश्च का-।
शब्दे शक्तिः, कुलालस्य जनके घटशक्तिवत् ॥११९॥

**Rejection of Śabda-śakti**

118. Also the energy that is the concept—'this should be known from this'—is proved an intellectual knot between two

concepts—'concept of word and the concept of meaning or object' As this knot lives always in the intellect alone, it is also an intellect or concept

We derive the following conclusion of it

119. The energry–'this should be known from this' lies in concept and concept lies in soul and soul is not an utterance : Śabda. And hence how can the energy of said concept be treated as living into the objective word : utterance ? It is as impracticable as the acceptance—'the energy which produces a jar lies in potter's father.' Moreover—

**अभिधादिः**

अस्माच्छब्दादिति शेष । तदिद मुख्याया॰ शब्दशक्ते स्वरूपमभिधाभिधानाया। । सेय स्वतन्त्र॰ पदार्थं इति वैदिका , सम्बन्धात्मा सकेत इति च तदिरे दार्शनिका । तत्रोदाहरणं श्रीनर्मदाप्रतिपादकं 'रेवा'-पदम्, श्रीगङ्गा-प्रतिपादक च 'भागीरथी'–पदम् । अनयोर्यत् स्रोतोविशेषप्रतिपादकत्वसामर्थ्यं सैव **अभिधा** नाम्नी मुख्या शक्तिः । अन्वय-व्यतिरेकौ चास्या रेवा-भागीरथी-शब्दाभ्यामिति तन्निष्ठतैवास्या उचिता ।

यच्च 'रेवाया तपावनानि'-इति 'गङ्गाया काशी'-ति प्रयोगयोः स्व-स्व-तट-प्रतिपादकत्वमेतयो साप्येका शक्तिः । अमुख्या हि सा । भक्तिर्गुणवृत्तिर् **लक्षणा** इति च तस्या अभिख्यानानि । न च मुख्ययैव गतार्थासौ, जलवेणिविशेषप्रतिपादकाभ्या रेवा-भागीरथी-पदाभ्या तत्तत्तटयोर्जलवेणिविशेषवत् प्रथमोपस्थितेरदर्शनात् । अत एव शक्यसम्बन्धरूपतामस्या आमनन्ति तज्ज्ञाः । शक्यौ हि जलवेणिविशेषौ रेवा-भागीरथी-पदयोः । सम्बद्धौ च तटविशेषौ ताभ्याम् । ननु कथमतद्वाचकाभ्या तत्तदर्थान्तरप्रतीतिरिति चेत्, प्रसिद्धिप्रयोजनाभ्यामन्यतरेणोपजनितात् तात्पर्यविषयीभूतेऽन्वये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया अभावादिति ज्ञेयम् ।

या च रेवासम्बन्धेन तपोवने भागीरथीसम्बन्धेन च काश्या पवित्रतातिशय-प्रतिपत्ति , तत्र मुख्या अमुख्या चेदुभयविधापि शक्तिरियमशक्ता, पवित्रतातिशये रेवादिशब्दात् प्रथमोपस्थितेरदर्शनात्, प्रसिद्धि-प्रयोजनयो:, तज्जानतस्य च तादृशाभावस्याप्यत्राभावात् । स्तश्च तादृशातिशय-प्रतिपत्तौ रेवा गङ्गा-शब्दयोरेवान्वयव्यतिरेकौ । भवतश्च ततस्तावेवात्र हेतू । भवति च सर्वोऽपि हेतुः सव्यापारः स्वक्रियानिष्पत्तौ । न हि चलनव्यापार विना सम्भवच्छक्तिका लेखनी लिपिसिद्धौ, न वा कर्तरिका पटद्वैधीभाव-सम्पत्तौ । ततश्चान्यथानुपपत्त्या पवित्रतातिशोतिप्रतिपत्तयेऽपि कल्पयितव्य एव कश्चन तृतीयो व्यापारो रेवा-गङ्गा-शब्दयोः ।

एवमेव नानार्थशब्दप्रयोगस्थले प्रकरणादिभिरेकस्मिन्नेवार्थे शक्तौ नियमितायाम्, अशक्यप्रवर्तनाया च लक्षणाया येयमप्राकरणिकार्थप्रतीतिः समासाक्त्यादिवदेषा, वाक्यभेदाभया, एतद्विषयोभूतस्यार्थस्य प्राकरणिकेनार्थेन सह सम्बन्धश्च नान्यथोपपत्तिक इति च कल्पनीय एव तृतीया व्यापारो रेवा-गङ्गा-शब्दगत. ।

किं च 'भ्रम धार्मिके'-त्यादौ स्थले विधीयमानेऽपि भ्रमणे या भ्रमण-निषेधप्रतिपत्तिः सा नान्यव्यापारसाध्या अन्यत्र तृतीयात् कस्माच्चिच्छब्दव्यापारात् । नास्ति च 'मा निषादे'-त्यादौ क्रोधशोकादि. शब्दः, प्रतीयते च शोकादिरिति तदर्थमपि शब्दनिष्ठत्वेन कल्पयितव्य एव तादृशो व्यापारः । असौ च तृतीयो व्यापारो व्यञ्जना-दिपदवाच्यः ।

एवमेवाभिहितान्वयसिद्धान्ते पदार्थाना पारस्परिकस्यान्वयस्य प्रतीतयेऽपि वाक्यरूपशब्दगतत्वेन तात्पर्यप्रत्यायिका काचन शक्तिरवश्य कल्पनीया । सा च तात्पर्यनाम्नेवाभिधीयेत ।

शाकुन्तलादिषु शकुन्तलादीना दुष्यन्तपत्नीत्वादेरप्रतिपत्तयेऽपि भावकत्वनामा कल्पयितव्य एवापरः काव्यव्यापारः, भोजकत्वापरपर्यायो रसनव्यापारश्च शृङ्गाराद्युपलब्धये । सोऽयं काव्यशब्दशक्तेर्बहुस्कम्भो वितानः ।

अत्र ब्रूम । अर्थनिष्ठा इमा इत्यर्थशक्तय इत्युच्येरन्, न शब्दशक्तय इति। शब्दो हि संकेतितत्वेन ज्ञात: सन्नर्थविशेष प्रतिपादयतीति सर्वजनानुभविकम् । सकेतश्चायमेव यदुत शब्दज्ञानार्थज्ञानयोर्मिथो ग्रन्थिबन्ध· संविन्मात्रनिष्ठ: । न हि बुद्धिमनारूढः शब्द·, अर्थो वा वाड्मयविषय इति प्रतिपादितमेव प्रकामम् । ग्रन्थिरेष सविन्मात्रनिष्ठो न तु शब्दार्थशरीरनिष्ठ इति च नानिश्चितम् । सविद्धि विज्ञानात्मा चिदात्मा वा। एव च सविन्निष्ठस्य ग्रन्थेः सविदेकरूपतैव स्थिरा, न त्वन्यरूपता । तस्माद् ज्ञानद्वयग्रन्थिसश्लेषरूप: सकेतोऽपि ज्ञानात्मक एव। ज्ञान च न शब्द: । शब्दस्य गुणत्वेनापि प्रतिपत्तौ नास्ति ज्ञानरूपेण गुणेनाभेद: । अस्ति च द्रव्यत्वमपि शब्दस्य वैयाकरणादिषु प्रतीतम् । सति द्रव्यत्वे कीदृशो नु तेन सहाभेदकल्पो गुणात्मकेन ज्ञानेन । द्रव्यत्वेऽपि ब्रह्मत्वे सति जीवात्मरूपस्य तस्याश्रयत्वमेव सम्भवति, आश्रितत्व च ज्ञानस्य, गुणस्य द्रव्याश्रितत्वनियते ।

ननु ज्ञानेन सह ब्रह्मण· अभेदोऽप्यभिमतो वेदान्तानाम्, तेषु ब्रह्मणश्चिद्रूपेणाङ्गीकृते, चित्त्वस्य ज्ञानस्य चानर्थान्तरत्वात् । तर्हि स्थितमेतद् द्रव्यात्मकोऽपि शब्दो गुणात्मकेन ज्ञानेनाभिन्न इति, यदि वा गुणत्वमेतद् दर्शनान्तराभिमतम्, ब्रह्माभेदपक्षे ज्ञानस्यापि शब्दजातीयत्वेनैव स्वीकारस्यावश्यकत्वात् । ननु का सा जाति: ? कि नु ब्रवाम, ब्रह्मण सर्वविधजातिशून्यत्वेनाङ्गीकारात् । एव च वेदान्तरीत्याऽभेद एव ज्ञान-शब्दयो, न तु भेद इति ज्ञानेऽपि विद्यमानायाः शक्तेः शब्दनिष्ठतायामभ्युपजिगमिषिताया को दोष: ?

हन्त, परामार्थिकी सा कथा। व्यवहार तु वय वोक्षामहे। तत्र च विषयविषयिभावेन स्थितेर्भेद एव स्वाभाविक: शब्द तज्ज्ञानयो: । ततश्च ज्ञाननिष्ठाया: शक्ते शब्दनिष्ठता कवितामात्रमेवेति यत्किञ्चिदेव, न तु हृदयङ्गमनीयम्। ज्ञान चार्थ इति शक्तय इमा अर्थनिष्ठत्वेनैवाभ्युपेयाः । यच्चार्थनिष्ठ कीदृशस्तस्य शब्दनिष्ठत्वग्रहः ।

सर्वास्वप्यासु शक्तिषु तात्पर्यनाम्ना अस्या आकाङ्क्षादिभिर्गतार्थत्वम्, अन्वयस्य तत एव बोधोपपत्ते । या व्यञ्जना सा हेत्वाभासाश्रितेन क्षिप्रगतिनाऽनुमानेन गतार्था, तस्या तद्व्यतिरिक्तायाः सामग्र्या लेशतोऽप्यभावात् । या च लक्षणा सापि मुख्यव्यापारपुच्छभूतैवेति तल्लग्नतयैव प्राचीनैर्वैयाकरणै, याज्ञिकैः, आलङ्कारिकैश्च प्रतीतचरा । यथैतत् तन्मुकुलभट्ट-भोजराजादिप्रबन्धेभ्यः प्रसिद्धमेव भूम्ना । भावकत्वरसनत्वे च विभावाद्यर्थसयोजनानिष्ठतयाऽभ्युपगते एव । एतदेव सर्वमभिसन्धाय ब्रूमहे 'शब्दार्थबोधयोः सविद्ग्रन्थिर्बोधात्मक' इति, 'शक्तिर्ज्ञान०००का शब्दे शक्तिरि'–ति च । अत्र कारिकाया सा इति पद चित्परामर्शकम् । शब्दो ध्वनिस्वरूप । दृष्टान्ते कुलालः शब्दज्ञानस्थानीयः, कुलालजनकश्च शब्दशरीरस्थानीयः । यथा हि कुलालजनको घटनिष्पत्तावन्यथासिद्धः, न तथा शब्दस्तज्ज्ञानजन्येऽर्थबोधे, तथापि कार्यकारणभावे पारम्परिकत्वस्यासाक्षाद्भावस्य वा प्रत्यायनाय दृष्टान्तः ॥ ११८-११९ ॥

अत्रैव तर्कान्तरम्—

**यदि शब्दस्य देहे स्याच्छक्तिः सूर्ये प्रकाशवत् ।**
**तदा विश्वस्य भाषाऽपि भवेदेकैव केवला ॥१२०॥**

120. If the so called concept ( energy or Śabda-Śakti ) were a power in the body of an objective word, utterrance, just like the light in the objective glob of the sun, the language too of each and every creature would have been one only all over the word [ like the light of sun. ]

शब्दस्य देहे, न तु शब्दस्य ज्ञाने । तथाहि यथा प्रकाश सूर्यस्य शरीरे तिष्ठति न तथा शक्ति शब्दस्य शरीरे । ततश्चाज्ञात-सूर्यभावोऽपि सूर्यो यथा प्रकाशे स्वतन्त्रो निरपेक्षमनुष्यादि-प्रकाश्यवस्तुज्ञातृभावश्च तथैव शब्दोऽपि भवेत्, स्वस्मिन्नाहितशक्तिकत्वे तस्यापि निरपेक्षबोद्धृसंकेतकत्वेन स्वीकर्तव्यत्वात् । एवगते स्थितमेव "अस्माच्छब्दादयमर्थो

बोद्धव्य" एवविधस्य निरर्थकत्वं सकेतग्रहस्य । एव च सति सूर्यप्रकाशवद् विश्वस्य भाषापि काचिदेकैव भवेत्, शब्दस्य स्वयमेवार्थबोधकत्वे बोधकत्वमस्य सर्वेभ्योऽपि समानमेव तिष्ठेत्, न चापेक्षेत देश-काल-जाति-जनितं भेदम् । नास्ति च तत् तथा, बोधकत्वस्यास्य देश-काल-जाति-भेद-भिन्नत्वेनैवोपलब्धेः ॥ १२० ॥

I Two types of power we feel

a. Residing in an object itself and

b Assumed in the concept of an object.

In former no defference is available with differing persons, countries and times It is represented by the semblance of Sun-light which is one and same in every part of world

We run away at once having been informed, though falsely, 'here lies snake.' Here concept is the only fact which is responsible in the creation of fear. Same is the case with language. We say mister x as y to a stranger and he coneives it as true. Moreover the word 'swan' stands for goose in English whereas for dog in Sanskrit. A cow is called Gauh and a dog as Śvan in Sanskrit, though the objects are same with each case. We donot find any word written on the body of its object Consequently the energy of word falls in the latter type of power conceptual.

II. This concept has its three parts

i the concept of word,

ii. the concept of meaning and

iii. the concept of relation lying between. Here third one is taken as the energy of word or Śabda-Śakti·

भोजः, 'एकत्वसम्पत्तिरेकार्थीभावन विदुः' इति च साहित्यमीमांसाकृत्[१] एतच्च सर्व सगृह्यते शारदातनयेन—[२]

१. वृत्तिस्त्रिधा पदार्थेषु पदानामुच्यते बुधैः ।
अभिधा लक्षणा गौणी ।। इति,

२. शब्दार्थयोः समन्यूनाधिकताभेदतस्त्रिधा ।
विवक्षा सा तु सन्दर्भे कविभिस्तु नियम्यते ।। इति,

३. वाक्यार्थं प्रति शेषत्वं यत् स्यादुच्चारणस्य तु ।
तत् तात्पर्यम् ।। इति,

४. अर्थस्यैतावतः शब्द एतावानलमित्ययम् ।
प्रविभागोऽर्थभागेषु शब्दभागविभागता ।। इति

५. सा व्यपेक्षा पदार्थानामाकाङ्क्षा या परस्परम् ।

६. या च क्रियाकारकादिभावेनान्वययोग्यता ।
वाक्ये पदपदार्थाना तत् सामर्थ्यमितीरितम् ।। इति ।

७ परस्परस्य ग्रथन पदानामन्वयः स्मृत ।
स नीरक्षीरवत् क्वापि तिलतण्डुलवत् क्वचित् ।
पासूदकवदन्यत्र दृश्यते बहुधान्वयः ।। इति ।

८. अविभागेन भवनमेकार्थीभाव इष्यते ।
[३]मुक्तक युगल चैव सन्दानितकलापके ।
सघात–कोशौ प्रकरण प्रबन्धश्च तत् समम् ।। इति च ।

---

१. सर्वेषामेषा सन्दर्भा अस्माक 'साहित्यसन्दर्भा' इति ग्रन्थे दत्तपूर्वाः ।

२. भावप्रकाशे ६.१५८, १६४, १७९, २१०, २१६, २१७, २१८-२० कारिकाभि. ।

३. पद्यमिदमस्माभिर्विरचितम् । अत्र द्वाभ्या चतुष्पदीभ्या युगलम्, तिसृभिः सन्दानितकम् चतसृभिः कलापकम्, एकप्रघट्टात्मक विस्तृतं वाक्यं सघातः, कोशो द्विविध नानावाक्यापसग्रहात्मा, नानाप्रघट्टबन्धात्मा चेति, कोश

एवं व्याख्याता अष्टौ सम्बन्धाः । ये चावशिष्टाश्चत्वारस्तेषु रसो निरूपितपूर्वः अलकारपदेनोपमादयोऽत्र विवक्षिताः । तेऽपि प्रायेण निरूपितलक्षणा एव । गुणदोषौ पुनर्नचिरादेव वक्ष्येते । स एष विस्तरः संवादिनामाचार्याणां साहित्यतत्त्वविषये ।

कुन्तकः पुनरन्यथावादी । तन्मते वाचकस्य वाचकान्तरेण, वाच्यस्य च वाच्यान्तरेण यः परस्परस्पर्धी न्यूनाधिकभावाऽकलुषितः सम्बन्धः स साहित्यम्' । यदुक्तमेतेन—

शब्दार्थौ सहितौ वक्र-कवि-व्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्य तद्विदाह्लादकारिणि ॥
शब्दो विवक्षितार्थैक-वाचकोऽन्येषु सत्स्वपि ।
अर्थः सहृदयाह्लादकारि-स्व-स्पन्द-सुन्दरः ॥
साहित्यमनयोः शोभाशालितां प्रति काप्यसौ ।
अन्यूनाऽनतिरिक्तत्व—मनोहारिण्यवस्थितिः[1] ॥ इति ।

अस्मन्मते पुनः व्याकरणमिद यदष्टौ सम्बन्धाः । तच्च सर्वविध-वाङ्मयसाधारणमिति न काव्यमात्रनियतम् । ततश्च

धर्माणामलभावजनकानां तत्त्वानां धर्मिभिः सह यः सम्बन्धः, यश्च धर्माणां धर्मैः धर्मिणा च धर्मिभिः सम्बन्धस्तत्त्रितयमपि साहित्यपदेन काव्ये व्यपदेष्टुमुचितम् । धर्मी चात्र चमत्कार्यर्थबन्ध एव ज्ञानात्मकः । य इमेऽलंभावजनका धर्मास्ते काव्य एव तिष्ठन्ति न काव्यशास्त्र इति काव्यमेव वस्तुतः साहित्यपदव्यपदेश्यम्, न काव्यशास्त्रम् ।

ननु सम्बन्धपरं साहित्यपद सम्बन्धिरूपेणार्थेन कथकारमभिन्नार्थकं स्यादिति चेद् अर्शआदित्वात्, उपादानलक्षणया वा कुन्ताः प्रविशन्तीतिवत् इति गृहाण । तदुक्त 'भक्त्या काव्यं च साहित्यमि'–ति ।

---

एव प्रबन्धमध्ये नानाविधोद्यानसलिलक्रीडादिभिर्युक्तः सन् प्रकरणम्, प्रकरण-समूहश्च प्रबन्ध इति भावप्रकाशनतः स्पष्टम् । बडौदासंस्करणस्य १५१ पृ० ।

१. वक्रोक्तिजीवितस्य प्रथम उन्मेषे ।

साहित्यविद्याशब्द: पुनः काव्य काव्यशास्त्र चेति द्वयोरपि कृतेऽप्रतिहतगतिकम्, साहित्ययुक्ता विद्या, साहित्यप्रतिपादयित्री विद्या चेति व्युत्पत्तिद्वयेन।

अयमत्र निर्गंलितोऽर्थः। काव्ये हि त्रिविधा उक्तिः १ वक्रोक्तिः, २. स्वभावोक्तिः ३. वस्तूक्तिश्चेति[1]। तत्र रूपकाद्युक्तिर्वक्रोक्ति., माधुर्यंप्रसादाद्युक्तिः स्वभावोक्तिः, विभावाद्युक्तिश्च वस्तूक्तिरिति। तत्र "मुखकमलम्' इत्यत्र धर्मा रूपक माधुर्यं प्रसादश्च, धर्मिणौ च द्वौ मुख कमलं चेति। अत्र रूपकप्रसादमाधुर्याणां ज्ञानात्मकाभ्यां मुखकमलरूपकाव्यात्मकधर्मिभ्यां य: सम्बन्धः स प्रथमं साहित्यम्, रूपकप्रसादमाधुर्याणा च परस्परं यः सम्बन्ध: स द्वितीयं साहित्यम्, तृतीय च साहित्यं मुखकमलयो:। एवमत्र त्रिविधमपि साहित्य कृतपदम्। तत्र चान्तर्भूतं भोजराजादीनां साहित्य द्वादशसम्बन्धात्मकम्। तथाहि प्रथमेऽष्टौ सम्बन्धा धर्मिभिः धर्मिणां साहित्येऽन्तर्भूताः, चरमाश्च चत्वारः प्रथमद्वितीययोः। ततश्चाहृत्य त्रिविधमेव साहित्यमत्र प्रतिष्ठितम्। यच्च कुन्तकस्य साहित्यं तदपि नातिवर्त्ततेतमामस्माकमलभावरूपमलङ्कारतत्वम्। तथाहि वाच्यस्य वाच्यान्तरेण वाचकस्य च वाचकान्तरेण यः परस्परस्पर्धितामयः सम्बन्ध. सोऽलभावरूपालंकारतत्प्रभवान्यतररूपत्वाद् विलीयतेतमामस्माकमेव प्रथम-द्वितीययोः साहित्यभेदयोः ॥ १४०–१४१ ॥

Following is the classified description of all the twelve elements called Sāhitya—

**Group A**

I. Vrtti

Bhoja=Abhidhā or expression

SM.=Function of words to denote meaning.

ŚT.= —do—

१. द्र० अत्रैव प्रथमकारिकोपस्कारकारिका।

II Vivaksā

Bhoja=Speaker's notion to relate and shape the meanings in perticular way.

S M.=Skeaker's will to narrate the meaning briefly or elaborately.

ŚT.= —do—

III Tātparya

Bhoja=The meaning ultimately aimed to be expresed in sentence

SM.= —do—

ŚT = —do—

IV. Pravibhāga

Bhoja=The division of meanings in word, in sentence or in book like 'This much portion of meanings is meantfrom this much group of words.

SM = —do—

ŚT.= —do—

Group B

V. Vyapepkṣā

Bhoja=Dependence of meaning on another one

SM.= —do—

ŚT.= —do—

VI. Sāmarthya

Bhoja=Fitness for relation.

SM.= —do—

ŚT.= —do—

VII. Anvaya

Bhoja=Relation of meanings.

SM.= —do—

ŚT.= —do—

VIII. Ekārthībhāva

Bhoja=Completeness of the syntictical meaning.

SM.= —do—

ŚT.= —do—

Group C

IX Rasa=As connotated in the gloss of K 101

X Alamkāra=Simile etc

XI Guṇa=Śles a, Prasāda etc.

XII. Adosa=Flawlessness. =Bhoja, SM and ŚT.

For detailad studay one may see my book 'Sāhitya-sandarbhāh' in samskrta

II. It may be noted here that by this new definition of ours every aspect of all these different rhetoricians for 'Sāhitya' is covered

III. The term Sāhityvidyā is already used by Rājaśekhara in his Kāvyamīmāmsā, however it is confined upto poetry and drama only and does not cover the rhetorics too. Eventhough scholars take it in the sense of poetics and dramaturgy also [ K. 141 ]

The group of qualities and qualitied and the order in their concurrence :

Ī Old record :

Ānandvardhana [ DH 2-6 Km. ] proclaimes the Simile and Super imposition etc. are equal to the necklace and bracelets etc. in a body. Accordingly the figures of speech seem to be attached to the poem after it is composed, and their existence is but superfluous or only of outer or overt nature. On the other hand Kuntaka shouts just contrary to Ānandavrdhana. To him Alamkāra is the primary, unavoidable and most essen-

tial entity of poetry and no poetry can do without it. [ VJ. 1.6 ] Mammata chooses mid-way and gives no stress on the clarity of Alamkāra. [ KP 1 ] All the same he admits the said equality with bracelet and necklace etc. of Alamkāra [ KP 8 2 ]

Jagannātha neglects both Alamkāra and Guna in his definition of poetry and refutes them very strongly. In his viewpoint Alamkāra is an outer thing like necklace and it is not a limb of poetic body To him Guṇas in rasa have no existence at all.

This way rhetoricians differ in their opinions about the order in concurrence of qualities and qualitied Now what one should be known as the final stand ?

**काव्येन रूपकादिसम्बन्धः**

ननु रूपकादीना ध्वन्यालोके 'अङ्गाश्रितत्व'[1] कटकादिदृष्टान्तेन साधितम्, साधित च तदेव काव्यप्रकाशे हारादिदृष्टान्तेन[2]। ततश्च रूपकादीना विच्छित्तिविशेषाणा प्राचामलकारत्वेनाभिमताना स्थितमेतेन दृष्टान्तद्वयेनागमापायित्वम्। कुन्तकश्चान्यथावादी 'सालकारस्य काव्यते'–ति। पण्डितराजेऽपि 'गुणालकारयो· शरीराऽघटकत्वमेव'। एवं विभिन्नासु प्रतिपत्तिषु का नु भवता प्रतिपत्तिरिति प्रश्ने ब्रूमहे—

**भूषा लावण्यमङ्गानि देहे स्युः क्रमिकाणि हि।**
**प्रतिबिम्बे परन्त्वत्र युगपज्जन्मता स्थिरा ॥१४२॥**

To me

142. The lustre, the elegance and the limbs may come one by one in human body, but in its adoptation in mirror they take symulteneous birth invariably.

---

१. 'अङ्गाश्रितास्त्वलकारा मन्तव्या। कटकादिवत्'-इति ध्वन्यलोके द्वितीय उद्द्योते।

२. उपकुर्वन्ति त सन्त येऽङ्गद्वारेण जातुचित्।
हारादिवदलकारास्तेऽनुप्रासोपमादय. ॥ काव्यप्रकाशे ८ उ० ॥

भूषेत्यादिकम्। क्रमिकाणि पूर्वमङ्गानि पश्चात्तु भूषादिकमिति क्रमेणाङ्गानि स्युरिति योजना। दृष्टान्ते पुनः क्रमो न भवति ॥ १४२ ॥

**सामाजिकस्य हृल्लेखां यदा काव्यं वगाहते।**
**तदौपम्यादयोऽप्यत्र जायन्ते सममेव हि ॥१४३॥**

143 Likewise when the poetry ascends the heart of an enjoyer, figures of speech like simile too emanate with poetry [ and not afterwards ]

समनन्तरोक्तेन प्रतिबिम्बदृष्टान्तेन स्थिरमेतद् यत् काव्य तदलंकारश्चेत्यनयोः समवायित्वमेव, न संयोगित्वम्, न वा पृथक्स्थितिकत्वम्। ननु 'सामाजिके प्रतिबिम्बदृष्टान्तो युक्त, कवौ पुनः 'उत्पन्न द्रव्य क्षण निर्गुणं निष्क्रिय च तिष्ठतो'-ति जातितो[1] गुणादीन् धर्मान् पृथक् साधयितुमवश्यमुपेयेन न्यायेन तिष्ठेदेव काव्य क्षण निरलकारमेवे'-ति चेन्न्यायस्यास्य वस्तुसामान्यपरीक्षणमात्र-सगतत्वम्, न तु वस्तुविशेष-परीक्षणोपयोगित्वमपि। यथा चैतत् तदुपपादयामोऽग्रिमेण सन्दर्भेण। ततश्च जातिजातिमन्न्यायोऽत्रादरणीय, न तु गुणगुणिन्यायः ॥ १४३ ॥

**यथा हि सुन्दरे देहे निर्वाच्ये भूषणादिकम्।**
**अङ्गभावं व्रजत्येव, काव्ये साम्यादयस्तथा ॥१४४॥**

144. As, in the definition of beautiful figure the qualities are counted invariably, likewise the figures of speech like Simile and qualities like Mādhurya [ would invariably be counted ] in the definition of Poetry.

एतेन 'रमणीयार्थप्रतिपादकः शब्दः काव्यमि'-ति काव्य लक्षयित्वा शब्दार्थविशेषयुग्मस्य काव्यतावादिन. प्राचः प्रत्याख्याय 'लक्षणे गुणालकारादिनिवेशोऽपि न युक्त' इत्यारम्भ 'शौर्यादिवदात्मधर्माणां गुणानां

१. जातिर्हि द्रव्येन सहैवोत्पद्यते, ततः पश्चादागन्तुकेभ्यस्तस्याः पार्थक्यम्।

हारादिवदुपस्कारकाणामलकाराणां च शरीरघटकत्वानुपपत्तेश्चे'–ति यावत् प्रागल्भीमुपजग्मिवान्[1] रसगङ्गाधरकारो भग्नफणः ।

ननु 'उदितं मण्डलं विधो.' इत्यत्र [2]दण्ड्यभिमते काव्ये [3]भामहाद्यभिमतगुणालकाराभावदर्शनादकाव्यत्वप्रसक्तिः, अस्ति चात्र काव्यत्वम्, चमत्कारस्य सत्त्वादिति चेद् उच्यतां 'किमत्र चमत्कारकारणमि'–ति । ननु 'प्रतीयमाना दूत्यभिसारिकादिव्यवहारसम्पदत्र तदि'–ति चेद्, हन्त सैवास्माकमलकार 'ये च भेदकास्ते कलायामलकार' इति सिद्धान्तितत्वात् ।

ननु 'युक्तवादिनस्तर्हि वय काव्यलक्षणे रमणीयतामात्रमाददाना:, प्रत्याचक्षाणाश्च प्राचीनाऽऽचार्याभिमततथाविधगुणालङ्कारादिनिवेशमि'-ति चेत्, सत्यम्, मार्गस्था भवन्तः, किन्तु विप्रलब्धाः शरीरात्मदृष्टान्तेन दाशनिक-वेशरथ्या-सप्रवेशराभसीनिपुणेन । कथमिति चेद् कारणद्वयेन । अलङ्कारतत्त्वस्योपमादिमात्रपर्यन्तसकोच-तिरस्कारेण, दृष्टान्ते चैतन्यतत्त्वनिवेशेन च । निवेशनीयमेव चेद् दृष्टान्ते किंचित् तर्हि निवेश्यता नाम

---

१. रसगङ्गाधरस्य काव्यलक्षणप्रस्तावे प्राचीनान् प्रत्याचक्षाणः ।

२. काव्यादर्शे ( १।२४४ ) दण्डी—

'गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इतीदमपि साध्वेव कालावस्थानिवेदने ।।

इति साधुत्वमत्र पश्यति साधयति च काव्यत्वम् । स्पष्ट च तत् 'सन्ध्या प्रवर्त्तते' इति वाक्प्रयोगात् ।

३. भामहः पुनर्दण्डिनो 'गतोऽस्तमर्को भाती'–त्यादिनि वचने काव्यत्वाभाव साधयति ।

गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते ।।

इति ब्रुवाणः काव्यालकारे २।८७ कारिकया ।

सौभाग्य-लावण्याभिजात्यादयो[1] धर्माः, वक्तव्य च लावण्यवति शरीरे लावण्यमेवात्मेति । अस्ति च ध्वनिप्रस्थानपरमाचार्यस्य तथा प्रतिपत्तिः 'प्रतीयमानमर्थं लावण्येनोपमिमानस्य'[2] । समवेत हि लावण्य शरीरेण । चैतन्यरूपमात्मतत्त्व पुनः सयुक्तमेव, न तु समवेतमिति तस्य द्रव्यत्ववादिनामनुरोधा, द्रव्ययोः परस्पर सयोगातिरिक्तस्य सम्बन्धस्यासभवात् । सन्ति च काव्यधर्माः काव्यसमवायिनः । तत कीदृशो नु समवायिभ्यः सयोगस्य दृष्टान्तः । कि च शौर्यादयो गुणा चैतन्यरूप आत्मनि तिष्ठन्तीति येऽभ्युपयन्ति ते परित्यक्तदेहान् आत्मनः परिपृच्छन्तु कि नु भवत्सु शौर्यमि–ति । अपि शक्नुयुर्भवन्तः प्रधानमन्त्रित्वमात्मनो राष्ट्रस्य बोढुम्, बोढु वा राष्ट्रपतित्वम्? हन्त निरुत्तरा इमे । किन्नु ते उत्तरेयुः करणानामपायात् ।

एव च सयोग एष देहात्मनोर्यत्र शौर्यादीना प्रतिष्ठा, न तु विश्लेषे । ननु संयोगो गुणः, स च निर्गुणः, कथ तर्हि तस्य शौर्यादिमत्त्वम् इति चेदास्तां तर्हि सयोगिनोरनयोः शौर्यादयः, देह आत्मा चेति द्वयोरपि द्रव्यत्वात् संभवत्येव शौर्यादिगुणाऽऽश्रयत्वम्, इदमेव च द्रव्यत्वं यद् गुणाश्रयत्वम् । तदित्थमागत गुणानामपि शरीरधर्मत्वमेव, परिहृत चात्ममात्रवृत्तित्वम्, प्रचुरप्रचारम् ।

कि च न्यायविदो भवन्तः । भवन्त एव विचारयन्तु कुत्र नु काव्यत्वम्, शुद्धे वा शब्दार्थयुग्मे सुन्दरे वा । सुन्दरे चेत् किन्नु तत्र सौन्दर्यसाधनम् । साधन विना साध्यस्याशक्यनिष्पत्तिकत्वात् । अत एव रम-

---

१. अत एव कुन्तको वक्रोक्तिजीविते—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥

इति लावण्योपमा न्यक्कृत्य सौभाग्योपमा योजयति १।३३ कारिकावृत्तौ ॥

२. ध्वन्यालोके १।४ ।

णीयतामात्र निवशेयन्ति काव्यलक्षणे लक्षयन्ति च तां लोकोत्तराह्लाद-जनकज्ञानगोचरत्ववत्वेन। अकाव्यात् काव्ये समुपलभ्यमानो योऽय तादृश-ज्ञानगोचरत्वरूपो विशेषस्तत्र किं नु मूलमिति पृष्टा किं नु ब्रूयुः श्रीमन्तोऽपि तत्कारणीभूतमलभावापरपर्यायमलङ्कारमन्तरा। अत एव युक्तभाषी तत्रभवान् कविताकामिनीकुन्तलः कुन्तल कुन्तकापरनामधेयः 'सालकारस्य काव्यते'ति ब्रुवाण. समाद्रियमाणश्च वक्रोक्तिरूपेण अलकारेणानेन काव्यस्य कृत्स्नानपि शोभाधायिनो धर्मान्। एवं सति तत्रैव पततु भवता परश्वधो ये हि अलकारतावच्छेदकावच्छिन्नत्व रूपकादिष्वेव सकोचयन्ति। ये पुनरलभावापरपर्यायमलकारमामन्वते ते पुनर्विचराम एव घण्टापथे वयम्, अस्मत्तुल्यधर्माणो दण्डि-भामहोद्भट-वामन-कुन्तक-भोजराजादयश्च। ततश्चासदृशमिद यद् ध्वनिपञ्जरशुकैर्मेधाविभिरप्यार्यप्रभृतिभिरुदारदृशामपि जरत्तराणा महत्तराणा चैकपद एव न्यक्कारो दण्डिप्रभृतीनाम् ॥ १४४ ॥

उक्तमेवार्थमुपपादयामोऽग्रिमाभि. तिसृभि. कारिकाभि:—

अ सुन्दरस्य शब्दार्थ-द्वन्द्वस्यात्र न केनचित्।
काव्यत्वं मन्यते, यस्य मन्यते सुन्दरं हि तत् ॥१४५॥

सुन्दरस्य च सौन्दर्यं बिना हेतुं न संभवेत्।
हेतुश्च तत्रालंकारः कोऽसौ यस्तं निवारयेत् ॥१४६॥

काव्यस्य लक्षणे प्राचामलंकारा -योजना।
नास्ति दुष्टा गुणं त्यक्त्वा गुणी यन्न निरूप्यते ॥१४७॥

And again :

145. By no critic the word, the meaning and the combination thereof admitted as poetry unless they are beautiful. And what is admitted as poetry is beautiful invariably.

146. And the beauty of any beautiful is totally impossible if it does not have beautifier. The Alamkāra=adequacy is the only beautifier. Now who can avoid it [ while defining poetry ].

147 Therefore it is not un-correct if the ancient rhetoricians include the ornomentation in the definition of poetry. The qualitied can never and nowhere be defined if the qualities are avoided.

गुणमन्तरा गुणिनः निरूपणस्यासभवे तन्त्रान्तराण्यपि संवादभाञ्जि यदुच्यत एतैः 'विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वं दण्डस्येव दण्डिनो बोध' इति ।

एवं हि स्थितमिदं यत् काव्यलक्षणे न ह्येव परिहार्यो रमणीयताया आधायकस्य कस्यचिदपि कारणस्य तत्समुदयस्य वा निवेशः । या च शरीरघटकत्वानुपपत्तिः साप्यनुत्थानपराहता, सुन्दरस्य निर्वचने सौन्दर्य-जनकाना शरीरघटकत्वस्यापरिहार्यत्वात् ॥ १४५–१४७ ॥

काव्यधर्माः

दोषाभाव-गुणौपम्याद्यलकाराणा काव्यधर्मतया वामनानन्दवर्धना-भिनवगुप्तमहिमभट्टमम्मटादिषु प्रसिद्धेः साप्रत स्व-दर्शने तेषा यत् स्वालक्षण्य तदुपस्थापयितु प्रक्रमामहे । तत्राभावज्ञानस्य प्रतियोगि-ज्ञानाधीनत्वाद् दोषाभावज्ञानाय दोषसामान्य तदभावात्मतया गुण-सामान्य च प्रस्तुवीमहे—

दोषगुणौ

**शब्दार्थ-योजनेऽभ्यासं विना नो पूर्णता भवेत् ।**
**अपूर्णतैव दोषस्, तद् दोषाभावश्च पूर्णता ॥१४८॥**

**Fallacy and quality in Poetry :**

148. In the composition of words and meanings no perfact-ness is possible without [ the perfactness in ] practice. This

imperfactness is fallacy or defect and undefectedness is perfaction

काव्य हि ज्ञानविशेषः। तस्य पतद्ग्रहश्च मध्यमा भाषा। एव च कवि-सविदि प्रकाशित काव्य बहिःप्रकाशनाय प्रतिबिम्बात्मना मध्यमात्मिका भाषा प्रविशति, तत्प्रतिबिम्ब च ध्वन्यात्मिका वैखरीम्। एव च प्रतिबिम्बस्येद प्रतिबिम्ब यद् वैखरी प्रविश्य काव्यात्मना बहिः श्रूयते।

ननु कथमुच्यते 'मध्यमात्मिकाया भाषाया यत् काव्य तत् प्रतिबिम्बात्मकमिति, मध्यमायाः सवित्त्वेनैव स्वीकृतचरत्वात्। ततश्च या खलु कविसवित् सैव मध्यमेति संविन्मध्यमाभेदोपन्यास एष स्वोक्तिविरुद्ध इति।

साधु, देवदत्तनामा बालो यौवन यावत् काचिदपि भाषा नाभ्यस्यत्, अनभ्यस्तभाषोऽप्येष लावण्यविलक्षणं मुख चन्द्रतया, आरुण्यदन्तुर करतल च कमलतयाऽमस्त। अभ्यस्तभाषः पुनर्विमर्शमिम हृदय एव जुगुम्फ, प्राचीकटच्च वैखरीद्वारा कालान्तरे। अत्र हृदये यो बन्धः स मध्यमाभाषात्मकः, प्रथम-प्रकाशानन्तरीय. सः। किमत्र प्रतिपत्तव्यम्, ऋते प्रतिबिम्ब-रूपत्वम्।

तत्र ज्ञानात्मकयोः शब्दार्थयोर्योजना तदैव पूर्णभावमारोहति प्रवर्त्तते यदा काव्यसपादने पौन पुन्येन कविः। सेय पौनःपुन्यपवित्रा प्रवृत्तिरेवाभ्यासपदवाच्या। पूर्णभावश्च पूर्णता। सा कार्यमात्रानुमेया तत्त्वाभिनिवेशिभिः सहृदयैः। अनधिकारिण खल्वत्र ये किलारोचकिन., सतृणाभ्यवहारिणश्च। अनवद्यसकलावयवतैव हि पूर्णता। तथाच महाकविः—

ता वीक्ष्य सर्वावयवानवद्या,
रतेरपि ह्रीपदमादधानाम्।
जितेन्द्रिये शूलिनि पुष्पचापः,
स्व-बाणसिद्धि पुनराशशसे॥ कुमारसं०—३॥

इति देवीवर्णने। अत्र पुष्पचापस्तत्त्वाभिनिवेशी भावकः। अस्ति च तस्य देवेऽपि स्व-समानधर्मत्वधीः, तत्र च लिङ्गं तद्गता पुष्पेण शूलस्य, देव्या च देवस्य पराभवाशसा। सत्या च सा। अत एव देवोऽपि तथा-भूताया देव्या त्रीण्यपि विलोचनानि व्यापारयति– व्यापारयामास विलो-चनानी'ति। अस्ति च विश्वमिद देवस्य काव्यम्, ततश्च देव्यपि कवितासतत्त्वैव। एव बिश्वमूर्त्तेर्भगवत. शिवस्य स्वकाव्यगतां पूर्णता प्रति स्वाभाविक्येव रति। तत्र यत् तृतीय विलोचन तत् प्रतिभात्मकमिति महामाहेश्वरस्तत्रभवान् महिमाचार्य·—

रसानुगुण-शब्दार्थ-चिन्ता-स्तिमित - चेतसः।
क्षण स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः॥
सा हि चक्षुर्भगवतस्तृतीयमिति गीयते।
येन साक्षात्कारोत्येष भावास्त्रैकाल्यवर्त्तिनः॥'[1]

इति। निर्मिता कविता वीक्षमाण हि विलोचन भावकमेव। अस्ति च तत्र भावयित्री प्रतिभा राजशेखरख्यापिता। अस्ति च देवी वसन्त-पुष्प-मात्राभरणा। रिरक्षिषति सा स्वकीयमव्याजमनोहरत्व देवस्य समोहनाय। त्रैगुण्यस्य देव्येकरूपतया वसन्तपुष्पाभरणानामपि तदभिन्न-त्वात् अनलंकृतत्वमेव च भगवत्या बाह्यैरुपकरणैः।

एव च यदिद सर्वावयवानवद्यत्व काव्यस्य सैव तस्य पूर्णता। सा च स्वयप्रकाशा सहृदयानाम्। नास्ति तत्रान्वीक्षिकी-पर्यनुयोग॰। अनुभव एव तत्र परमश्चरमश्च। तामिमा पूर्णतामेवारूढ काव्यम् अदोषम्। अपूणता च विकलाङ्गता। सा च व्यक्तमेव दोषः।

इदमत्रावधेयम्। भाषा हि कालेन पच्यते। लब्धपरिपाका च भज-तितरा क्षमामर्थप्रकाशनपटिष्ठा क्रमेणैव। ततश्चारम्भे तत्र स्थितैवा-पूर्णता। सा च क्रमेणैव हीयते। परिहीणा च सर्वतोभावेन भजतेतरा

---

१. व्यक्तिविवेकस्यास्मत्संस्करणे पृ० ४५२-५३।

पूर्णताम् । एवं च पूर्णता नियतमेव अभ्याससापेक्षा, स्वाभाविकी च अपूर्णता स्वत एव प्रतिष्ठितमूर्त्तिः । ततश्चापूर्णतारूपो दोष एव पूर्वजः सहजो वा, पूर्णतैव चानुजाऽऽहार्या वा ।

यच्च केषाचिद् गुरु-देवता-प्रसादादिना सहसैव प्रसरति वाक्प्रस्रवणं तत्त्वलौकिकत्वान्नमस्यमेव । न तद् दृष्टान्तो व्यवहारप्रसिद्ध्यै ।

एव च स्थितमेतद् यद् अपूर्णतैव दोषः । स च सहज एव प्रारम्भिके काव्यप्रकाशे ।। १४८ ।।

दोष निरूप्य गुण निरूपयितुमुपक्रमामहे—

**या चैषा पूर्णता सैव गुणत्वेन मुनेर्मता ।**
**गुणाभावे च दोषत्वं वामनेन निरीक्ष्यते ।।१४९।।**

149. This perfection is the only thing which is considered by Bharata as poetic virtue or accomplishment. Just contrary to Bharata an un-accomplishment is a defect in Vāmana's viewpoint.

पूर्णतैव गुण इत्यस्माकं दर्शनम् । दोषाभावो गुण इति तु भरतस्य । तथा चोक्तमेतेन—

गूढार्थमर्थान्तरमर्थहीन भिन्नार्थमेकार्थमभिप्लुतार्थम् ।
न्यायादपेत विषमं विसन्धि शब्दच्युत वै दश काव्यदोषाः ।।[1]इति।।

एते दोषा हि काव्यस्य मया सम्यक् प्रकीर्तिताः ।
गुणा विपर्ययादेषा माधुर्यौदार्य - लक्षणाः ।।[2] इति च ।।

१. भरतनाट्यशास्त्रस्य बड़ौदासंस्करणस्य १५।८८

२. तस्यैव १६।९५ अत्र पाठः—

एते दोषास्तु विज्ञेया. सूरिभिर्नाट्यसश्रयाः ।
एत एव विपर्यस्ता गुणाः काव्येषु कीर्तिताः ।।—इति ।।

अत्राभिनवगुप्तः—

'अथ गुणेषु प्रतिजानीते'—'एषा विपर्ययाद् गुणा भवन्ति, एतद्दोष-विघात एव गुणो भवतीत्यर्थः' । इति ।[१]

ननु 'माधुर्यौदार्ययोरेव दोषाभावरूपगुणलक्षणत्वमाचार्यस्याभिमतमभिनवगुप्तस्य च । यथोच्यतेऽभिनवभारत्याम्—

"किमविशेषेण ? नेत्याह । माधुर्यम् औदार्यं च लक्षणं येषाम् इति । एतदुक्तं भवति—'एतद्दोषविहीनं श्रुति-सुखं दीप्तरसं च यद् भवति तावता काव्यं लक्षणयोगाव्यभिचारीत्युक्तम्"[२]—इति ।

तत्र माधुर्यम्—

बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ।।[३]-इति,

औदार्यं च—

दिव्य-भाव-परीतं यच्छृङ्गाराद्भुतयोजितम् ।
अनेक-भाव-संयुक्तमुदारत्वं प्रकीर्तितम् ।।[४]-इति,

स्वयं भरतेनैव लक्षितम् । तत् कथमुच्यते दोषाभावो गुणानां सामान्यं लक्षणम् इति'–इति चेद्—

युक्तमुच्यते, अश्रुतिसुखत्वम् अदीप्तरसत्वं चेति द्वितयमपि दोषः । तदभावश्च काव्यमात्रसाधारणः । ततश्च सर्वेष्वपि गुणेषु दोषयोरनयोरभावोऽपरिहार्य इति मुनेराशयः । ये चात्रान्ये दोषास्तेऽप्यनयोरेव गतार्था इति एतदुभयाभावरूपत्वेऽपि परिणतमेव दोष-सामान्याभावरूपत्वमत्र गुणानाम् । अत एव गुणा अपि दोषा इवैव दशैव मुनिनापि गण्यन्ते, न

१–२ ना०शा०—१६।८८—अभिनवभारती ।

३. ना०शा०—१६।१०४ ।

४. ना०शा० १६।११० ।

न्यूना न वाभ्यधिकाः। यदि नाभविष्यदस्य दोषसामान्याभावात्मकत्व-मतिर्गुणेषु कथकारमसौ दश-सख्याकत्वेनैवैतान् निगडयेद् दण्डि-वामनाद्यनुवृत्तेन। ततश्चेदमेव भरतस्य हृदय यद् दशाना दोषाणामभावा एव दश गुणा इति।

'गुणाभावो दोष' इति तु वामनस्य दर्शनम्। तथा च तत्सूत्रम्-'गुणविपर्ययात्मानो दोषा'[1] इति। नूनमसौ भरतसूत्रमेव विपर्यासयते तत्पुरुष बहुव्रीहितया नीत्वा अभिषिच्य च गुणदोषयोः स्थाने दोषगुणौ ॥ १४९ ॥

ननु वामनस्य भरतमतविपर्यासे किं नु दर्शनमिति चेदिदम्—

**पूर्णता-भूमिकां रूढस्यास्य तत् सिंहवीक्षणम्।**
**राकेन्दौ दत्त-दृष्टेर्नु कुहूं यावन्निरीक्षणम् ॥१५०॥**

150 Vāmana's approach is retrospective one after having reached the perfection, just like that of one who, looking at the full moon thinks after the nights past upto that of interlunar.

सिंहो हि कियन्तंचिन्मार्गमतीत्य पश्चाद् वीक्षते। तदिद सिंहवीक्षण सिंहावलोकनपद-प्रतीतम्। तच्चात्र पुनर्वीक्षणात्मकम्। एव सति भाषायाः परिणति वीक्ष्य जातप्रवृत्ति हि वामनस्य दर्शनम्, भरतस्य च तस्या आरम्भिकी स्थितिम्। तत्र वामनाय दृष्टान्तो राकेन्दोरिति। राका पूर्णिमा। कुहूः अमावास्या। तद् यथा कश्चित् पूर्णिमायाश्चन्द्रमस वीक्षमाणस्तस्य पूर्णतामचिन्तयित्वा चतुर्दश्यादिक्रमेण अमावास्यां यावत् तस्य प्राक्तनी ह्रसीयसी स्थितिम् उत्प्रेक्षेत, उत्प्रेक्षेत च तत्र कलाना क्रमिकमेकैकशो ह्रास तथैव वामनस्य प्रवृत्तिः। भरतस्य च सर्वथा तद्विपरीतेति द्वयोरपि युक्तिशुद्ध दर्शनम्। स्वाभाविकत्वमस्वाभाविकत्वं

1. काव्यालकारसूत्रम्—२।१।१।

च कस्येति प्रश्ने भरतस्येति ब्रूमहे। भाषा हि क्रमेण कृशिमानं जहाति, पल्लवयति च क्रमेणैव परिपोषम्। तत्र अपूर्णतैव प्राक्नोति प्रतिपादित-मेव। ततश्च दोषप्रमोष एव प्राथमिकः, पूर्णता चाहार्या। एवं च भरतस्यैव स्वाभाविकता[1] स्वभावसिद्धा॥ १५० ॥

I. For the term Guṇa the word 'Quality'[ DH. 2-6 Km. ] and 'Merit' [ KP. 1-4 GJ. ] are not perfect so far as the pre-dhvani rhetorics is concerned. 'Excellence' [ KP 1-4 RC, 8.2 GJ ] too is of same category. 'Excellence of style' [ KP 1-4 GJ. ] is not a synonym.

II. For the definition of Guṇa see Bharata's N. S 16.88 BE, 16-95 BE. in variants see my footnote here only on page 225

III For the same see Vāmana's Kāvyālaṃkārasūtra 2-I.1. See my saṃskṛta gloss too.

IV. May be consulted my 'Ānandavardhana' PP 414 and on

अथ किंरूप एषोऽभावो यत्प्रतियोगितामार्या दोषेषु वीक्षन्त इति प्रश्न उच्यते—

दोषाभावोऽप्यसावत्र प्रागभावतया स्थितः।
काव्य-निर्माणतः पूर्वं परीहारोऽस्य यन्मतः ॥१५१॥

151. This undefectedness is treated by others otherwise. But traditionally it is accepted as prevention or avoidance of imperfectness before the poem is completed.

त्रिविधो ह्यभावः, प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावश्चेति। तत्र भेद-रूपस्यान्योन्याभावस्यात्यन्ताभावे पर्यवसानम्। अस्त्येव ह्यत्यन्ता-

१. आनन्दवर्धनाख्ये स्वकीये हिन्दीग्रन्थेऽस्माभिर्विषय एष वितत्योपस्थापितः। तत्र पृ० ४१४ तः परम्।

भावो देवदत्ते यज्ञदत्तस्य यज्ञदत्ते च देवदत्तस्य । एषूत्पत्तेः पूर्वं यावद् विद्यमानोऽभावः प्रागभावः, उत्पत्तेः पश्चादुत्पद्यमानः प्रध्वंसः, त्रैकालिकश्चात्यन्ताभावः । ननु प्रागभावप्रतियोगित्वमेव दोषेषु कथमिति चेद् 'दोषान् हेयतया वेत्ति स काव्यं कर्तुमर्हती'-ति[1] ब्रुवाणः श्रीभोज एवात्र प्रमाणम् । अस्ति च स एव कवीनां मार्गः ।

अत एवानन्दवर्धनः—

सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥[2] —इति,
वाच्यानां वाचकानां च यदौचित्येन योजनम् ।
रसादि-विषयेणैतत् कर्म मुख्यं महाकवेः ॥[3] इति च

तामेव दिशं दर्शयति, अन्येऽपि च तत्सवादिनः सुमेधसः[4] ॥ १५१ ॥

अत्रैव विकल्पः, ननु 'प्रध्वंसोऽप्यत्र शक्यसंभवः, आगतस्य दोषस्य परीहाराये'-ति । तत्रोच्यते—

**ततश्च दोष-सामान्य-विशेषाभाव-संकथा ।**
**अनुत्थान-हता, सैषा प्रध्वंसं यदि संस्पृशेत् ॥१५२॥**

152. And this is why no question arises of the nature of this Abhāva whether it is some what particular or general. It might have been raised if it would have been a distruction Abhāva after birth.

---

१. सरस्वतीकण्ठाभरणे १.३,५८ कारिके ।

२-३ ध्वन्यालोके

४. तथा च कुन्तकः—

वाच्योऽर्थो वाचकः शब्दः प्रसिद्धमिति यद्यपि ।
तथापि काव्यमार्गेऽस्मिन् परमार्थोऽयमेतयोः ॥
शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि ।
अर्थः सहृदयाह्लादकारि - स्वस्पन्द - सुन्दरः ॥ इति तस्य काव्यालंकारे ।

काव्यनिर्माणात् परं दोषपरीहारे दोषकलङ्कविरहिततया नूतनं तत् काव्य भवेत्, विनश्येच्च तद् यत्रासीद् दोष.। ततश्च प्रध्वसाभाव एष काव्यप्रतियोगिक एव जायेत। सोऽय शूलस्य परिहाराय शिरसश्छेदः। ततश्च प्रध्वसाश्रिता या दोषसामान्याभावस्य, दोषविशेषाभावस्य वा कथा साप्यनुत्थानपराहता, पक्षहाने ॥ १५२ ॥

किन्तु—

**प्रध्वंसो दोष-पङ्कस्य काव्य-काये कृत-स्थितेः।**
**नैव संभाव्यते, तस्मिन् सति काव्यं नवं भवेत् ॥१५३॥**

153. And if any mud of defect has got room in poem that would, in no case be eliminated. If eliminated the poem or its composition would be proved new one.

ननु सैषा प्रागभावेऽपि सभवतीति चेत्, सभवत्येव, किन्तु तत्र दोषसामान्यमेव विषयीभवेत्, न दाषविशेषः। प्रध्वंसे पुनरुभयाश्रित विषयत्वम्। कि च कविबुद्धिः काव्य रचयितु यदा प्रवत्तते तदा दोष-प्रागभावोऽप्येष परिहृतपरिहारः। यथाहि रज्जुपाशितचरण. काकोदर-भ्रमात् रज्जु द्रागेव क्षिपति मनुते च क्षिप्तो मया सर्परूपा मृत्युरित्ति तथैव अनिष्पन्नशरीर काव्यमप्रविष्टस्य दोषस्य परिहारा नाम दोषात् काव्यस्य रक्षा। सत्या च तस्या नास्त्येवाभावान्तरस्य प्रसक्तिः, ततश्च नास्ति पर्याप्तिपार्यन्तिकस्य दोषाभावविचारस्यापि प्रसक्तिरित्यलमेतेनाति-प्रसक्तेन दोषपरीक्षणदोषेण। एव निरूपिता गुणाः सकलावयवानवद्यत्व-रूपपूर्णताऽऽत्मना ॥ १५३ ॥

I. For avoidance or prevention see Sarasvatīkaṇṭhābharaṇa of Bhoja- Ch. 1-3 58 Kārikās

II. Others Commnentators of KP. They discuss this abhāva as Dosa-sāmānyābhāva or Dosa-viśesābhāva

Dosa in general or some what particular one. See my samskrta gloss on the K. 151 [ K 153 ]

प्राचा क्रमेणात्र गुणनिरूपणे प्रस्तुते स्वमतमपि प्रकाश्य सम्प्रति भूयोऽपि प्राचामेव स्वानभिमता गुणगाथा प्रस्तुवीमहि—

गुणेषु रसधर्मत्वमपि केषांचन स्थितम् ।
वैखरी–ध्वनि–पारुष्यादिकं तद्व्यञ्जनाद् गुणः ॥१५४॥

The old theory about 'Guna' and 'Rasa'

154. To some rhetoricians Gunas dwell also in Rasa. While suggesting them ( the rasa-Gunas ) the harshness and softness etc too reach the stage of Guna

केषाचन दण्डिविरोधि–भामहानुरोधिनामभिनवगुप्त–मम्मट–विश्वनाथानाम् । तथा च श्रीदण्डिना श्लेषप्रसादादयो दश गुणा लक्षिता । तानपहस्तयन् भामहो माधुर्यमोज प्रसादश्चेति त्रयाणामेव गुणानां तुष्यतु-न्यायेनेव नामान्युल्लिख्य शेषानुपैक्षिष्ट । अभिनवगुप्त पुनर्भामहमेवाभिजन-प्रीत्येव प्रमाणीकृत्य माधुर्यादींस्त्रीनेव धर्मान् गुणतयाऽनिनीषत । उच्यते हि तेन 'तमर्थमवलम्बन्ते येऽङ्गिन ते गुणा स्मृता' इति ध्वनिकारिकाया लोचने-'वस्तुतो माधुर्य नाम शृङ्गारादे रसस्यैव गुण' इति 'माधुर्यौज:प्रसादा एव त्रयो गुणा उपपन्ना भामहाभिप्रायेण, ते च प्रतिपत्रास्वादमया मुख्यतया, तत आस्वाद्य उपचरिता रसे, ततस्तद्व्यञ्जकयो शब्दार्थयोरिति तात्पर्यम् ।' इति च द्वितीयस्योद्योतस्यैव दशमकारिकाया व्याख्याने । एवमेव मम्मटोऽपि—

ये रसस्याङ्गिनो धर्मा शौर्यादय इवात्मन ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणा ॥ इति, विश्वनाथोऽपि—

'रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा । गुणा' इति ।

केषाचनेति न सर्वेषां ध्वनिमतानुयायिनामिति सकेतः। ततश्च रसगङ्गाधरे पण्डितराजोपज्ञो रसत्वातिरिक्त-गुणत्वानङ्गीकार आगूरितः। यदुक्तमेतेन 'दाहादेः कार्यादुष्णस्पर्शस्य गुणस्याग्नाविव रसे द्रुत्यादिरूपात् कार्यान्माधुर्यादेर्गुणस्य पृथगननुभवाद् शृङ्गारत्वादिकस्यैव द्रुत्यादिनिष्ठ-कार्यतानिरूपित-रसादिनिष्ठ-कारणताया अवच्छेदकत्वस्यानुमानाच्चाप्रमाणकमेव सर्वथा वेदेनाबोधित माधुर्यादीनां रसनिष्ठपृथग्धर्मत्वम्' इति।

अस्ति चानन्दवर्धनोऽपि गुणाना शब्दार्थधर्मताया अपि पक्षपाती। अत एव तस्येय भाषा

'शृङ्गारप्रकाशनपरशब्दार्थतया काव्यस्य माधुर्यलक्षणो गुण' इति,

'रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥ यथा—

'चञ्चद्भुजभ्रमिते'—त्यादि 'यो यः शस्त्र बिभर्ती'—त्यादि चे'-त्यादौ द्वयोरोजस्त्वम्' इति,

'समर्पकत्वं काव्यस्य यत् तु सर्वरसान् प्रति।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः'॥ इति,

'प्रसादस्तु स्वच्छता शब्दार्थयोरि-'ति च।

एतेन परिणतमिद यद् य इमे रसा एते केन गुणेन कुत्र भवितव्यमिति भवितव्यतामात्र-व्यवस्थापकाः, न तु शब्दार्थतो व्यवच्छेदकाः। यदि तु रसानामाश्रयत्वमेवानन्दवर्धनाभिप्रेतम्, यथाभिनवगुप्तस्तत्पञ्जरशुको मम्मटश्च निनीषतस्तर्हि रसनिष्ठतया, शब्दार्थनिष्ठतया च गुणानां षट्त्वं नवत्वं वापतेत्, समान-नाम्नाम्।

वैखरीध्वनिः कण्ठताल्वाद्यभिघातजन्यः स्वरः। तद्गतं पारुष्यादिकं 'रणत्करणझञ्झणत्क्वणितकिङ्किणीकं धनुः' इत्यादिषूक्तिषु न नानुभूयते सचेतोभि.॥ १५४॥

I. Mis understanding about the 'Guṇa-theory of Ānandavardhana is led by Abhinavagupta and followed by Mammaṭa

and others. Abhinavagupta snatched his own theory from the DH. 2 6 keeping aside all the other statements thereof, quoted here in samskrta gloss It is Abhinavagupta who runs after the theory 'Guṇas dwell only in Rasas and nowhere else,' whereas Ānandavardhana spake 'Guṇas are regulated by the Rasas even though they exist in words and meanings' This 'even though' of Ānandavardhan invited the negligence of word and meanings and accordingly of Bharata, Daṇḍin and Vāmana. What was intended by Ānanda was the regulerisation and proper division of all the three Guṇas on the ground of Dhvani and specially Rasa-dhvani He never shouted as to Guṇas did not live in words and meanings But he gave chance to these to launch interventions of their own theories, discording those of ancient rhetoricians like Vāmana. Jagannātha's frankness and freeness are admirable when he stands all alone against the entire tradition laid down by Abhinavagupata and followed or rather nourished by all the other followers of Dhvanischool, like Mammata and Viśvanātha Jagannātha refutes tolally the existence of Guṇas in Rasa and pleads adversely as to if one has to admit the existence of Guṇa, he is bound to admit the same in words and meanings too like Vāmana [ See introduction to Kārikā-142 ]

II. To me hardness, shoftness and shearness are common to all . Rasa, words, meaning and their combinations. Hence if Guṇas are only three in number they will reach the number nine having counted as 3 of Rasa, 3 of words and 3 of meanings. All the same their names may remain unchanged [ My Hindi book Ānandavardhanana, PP. 293, 298-391. ]

एव विचारितौ रसाश्रितत्व-शब्दाश्रितत्व-पूर्वपक्षौ गुणानाम् । संप्रत्यर्थाश्रितत्वं तेषा सप्रतिपादयामः—

**अर्थ-संयोजने केचिद् दृश्यन्ते ये गुणा बुधैः ।**
**ते तु काव्यशरीरस्य पूर्णभावे लयं गताः ॥१५५॥**

155. The Guṇas accepted by other scholars as dwelling in meaning or in the particular synthesis of meanings have been merged into the 'perfectness' of the body of poem.

पूर्णभावे लय गता इत्येतेनार्थगुणेषु सिद्धान्तत्वमागूरितम् ॥ १५५ ॥

I. The bifurcation of Guṇas between the two groups of word and meaning had been introduced for first time in the poetics by Vāmana ( 800 AD. ). Guṇas of meaning have no independent existence at all and they are identical with the perfectness or the accomplishment of the body of poem. This way I confess the theory of Bharata : Defectlessness is Guṇa.

II. On the above ground 'Guṇa' is an essentially for poetry like the twoness of eyes and hands That can not be admitted as an excellence. [ K. 155 ]

At this juncture once again we recollect the original viewpoint about the soul of poetry

सप्रति प्रकृतमनुसराम.—

**पूर्णतामीयुषो धर्मः काव्यस्यैको हि विद्यते ।**
**अलंभावाभिधः कश्चिदलंकारः परात्परः ॥१५६॥**

156. Of an accomplished body of poetry it is only one thing which can be shouted as the attribute and that is Alamkāra or adequacy The conclusion with a new example ·

एतदेव स्वोपज्ञ-दृष्टान्तमुखेनोपपिपादयिषवो भूयोऽप्यलङ्कारस्यैव व्यापकत्व धर्मान्तराणां च तदेक-व्याप्यत्वमुपतिष्ठापयिषामः—

**यथा सनातनो धर्मो दर्शनं संविधानकम् ।**
**दण्डनोपासने चेति चतुष्पात्त्वेन गाहते ॥१५७॥**

**तथैव भगवानेषोऽप्यलंकारो ध्वनिं गुणान् ।**
**उपमादीन् रसांश्चापि काव्य-काये वगाहते ॥१५८॥**

157. As the Dharma called Sanātana=Eternal bears (i) Philosophy (ii) constitution (iii) panal code and (iv) worship as its four legs [ like a bull ],

158. likewise Lord Alaṃkāra Adequacy too pervades all the poetic faculties named i Suggested sense, Dhvani ii Virtues Guṇas iii Ornamentation simile etc and Moods Rasa, Bhāva ite

दृष्टान्तस्य स्वोपज्ञत्व नामास्मदुपस्थापितत्वमात्रम्। तथाहि चतुष्पात्त्वेन प्रसिद्ध एव भगवान् धमवृषः। के नामास्य चत्वारः पादा इति जिज्ञासाया ते ते तथा तथा ब्रुवाणा अस्माक हृदय न स्पृशन्ति। यश्च स्पृशति स खलु धर्मशास्त्र ग्रन्थेषूपलभ्यमानोऽर्थः। स एषोऽत्र चतुर्विध. सोपानक्रमेण। तत्र प्रथमः पादो दशनम्, तच्च प्रसिद्धमेव प्रस्थानभेदेषु, सविधानकमिति नवानः शब्द. आचारसहितापरः, तत्र चातुर्वर्ण्य-स्वधर्म-समुद्देशः, तदुल्लङ्घनपरिहारोपायो दण्डनम्, तदपि प्रसिद्धमेवार्थशास्त्रादिषु, मनुस्मृत्यादिषु च भूम्ना, उपासन नाम आराधनम्, तच्च देवार्चनादिरूपेण तत्प्रतीकतया समुपादीयमानेन त्रिपुण्ड्रादिलक्ष्म-जातेन च गतार्थम्, निराकारोपासनाया पुन. 'सोऽहम्' इत्यखण्डवृत्तिरूपेण। यच्च 'अथातो धर्मजिज्ञासा, चोदनालक्षणोऽर्थो धर्मः' इत्यादिभिर्मीमासासूत्रैर्धर्मस्य वेदवाक्यपरत्व जैमिनीप्रभृतिभिर्महद्भिराचार्यैरुद्घोषितमुदारहृद्भिरुद्गीर्णम्, तद् वेदैकसीमितत्वेन न

सर्वजनीनम् । मनुस्मृत्यादिषु पुनर्भगवतो वेदस्य प्रामाण्यमात्रमूरीकृतम्, न तु धर्मरूपत्वम् । अत एव मीमासाया धर्मशास्त्रत्व भाक्तमेव । तथा सति वेदाङ्गसख्याने एकोनत्वप्रसक्ते. । अस्मदुपज्ञे पुनर्धर्मलक्षणे सगृह्यन्ते-तमामखिला अपि भूमिपृष्ठसमाश्रिता धर्मा:, दर्शन-सविधान दण्डविधानो-पासनानां सार्वत्रिकत्वात् । ततश्च यथा धर्मशब्दप्रतिपाद्योऽर्थो दर्शना-दीनि सर्वाण्यप्यङ्गानि सग्रह्णीते तथैवालकारोऽपि । तदेव प्रत्यपादि ध्वनिरित्यादिना तत्तदाचार्योद्दिष्टेन सज्ञानजातेन । तत्रेदमत्र निध्येय यत् परीक्षेय काव्यस्य य· कायः शरीर तत्र बद्धदृष्टीनाम्, न तु काव्यकायोपसजातफलासक्तदृशाम् ॥ १५७-५८ ॥

I. In vedic religion Dharma is treated as an ox having four legs In this metaphor scholars differ in the identity of the symbols of four legs Long before in Kālidāsa the term Dharma had been limited upto the rituals or the worship only [ RV. 1 21, 14-21, 87 57 ] In the Pūrva-mīmāmsā 'Dharma' has been accepted as Yañjna or the vedic rulings to do or not to do as propheted by the seers. But in the books like Manus-mrti we find the following containts.

i. Philosophy ii Constitution
iii Panal code and iv. God-worship.

Therefore to me these are the four parts which are the base of the entire building or constitution of Vedic Sanā-tana Dharma

Etymologically Dharma word is derived from the root Dhr to preserve, to retent, to maintain the individuality and society as well And for these all, all the said four elements are necessary Every constitution is based on any sort of philosophy and remaining two too, are of same nature. Therefore I my-

self derive the definition of Dharma of the containts of the works prescribed for Dharma itself and are famous as 'Dharmastsātra'.

II. So far as the Alamkāra is concerned one may resemble it with the Dharma defined above. Alamkāra is adequacy and it covers all the varieties which are known as Guṇa, Dhvani Vakrokti and the mere description having Vibhāva, Anubhāva and Sañcāribhāva, as it is said in the supporting verses of first Kārikā.

This way we have afreshed our memory for the docrine or the essence of this work Alamkāra or Adequacy is the only soul of Poetry.

And let us remember-'it is an analysis of the form of poetry and not of its result' [ K. 158 ]

Again we remember even the simile etc. can not be expressed in words :

स्मारयामश्चैतस्यालंभावापरपर्यायस्यालंकारस्य प्रतिपादितचरामनभिधेयताम्—

उपमादिस्वरूपेऽपि वाच्यतां न स्पृशत्यसौ ।
अन्यथा स्यादिवादिभ्यः केवलेभ्यश्चमत्कृतिः ॥ १५९ ॥

159 Even in the shape of simile etc it, adequacy can not be expressed Otherwise it may be expressed even by using the words 'IVA' or 'Like' etc and the charm would be felt [ See Kārikās 33–42 ]

यच्चालंकारत्वेन प्रसिद्धानां तत्त्वाना मध्य उपमादीनामनभिधेयत्वं तत् प्रतिपादितमेव वैशद्यातिशयेनात्र ॥ १५९ ॥

## लक्षणानि

विचारिता एव दोषगुणालङ्काराः। साम्प्रतं लक्षणाख्यान् काव्यधर्मान् विचारयामः। तत्र—

[ अवतरणिका ]

ननु 'विभूषणं चाक्षरसंहतिश्च शोभाभिमानौ गुणकीर्तनं च।
प्रोत्साहनोदाहरणे निरुक्तं गुणानुवादोऽतिशयश्च हेतुः॥
सारूप्यमिथ्याध्यवसाय-सिद्धि-पदोच्चयाक्रन्द-मनोरथाश्च।
आख्यानवादाः प्रतिषेधपृच्छा-दृष्टान्त-निर्भासन-संशयाश्च॥
आशीः प्रियं वै कपटं क्षमा च प्राप्तिश्च पश्चात्तपनं तथैव।
अथानुवृत्तिर्ह्युपपत्ति–युक्ती कार्यानुनीतिः परिदेवनं च॥
षट्त्रिंशदेतानि तु लक्षणानि प्रोक्तानि वै भूषणसंमितानि।
काव्येषु भावार्थगतानि तज्ज्ञैः सम्यक् प्रयोज्यानि यथारसं तु॥
॥ इति ॥[१]

काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः॥
भूषणाऽक्षरसंघातौ शोभोदाहरणे तथा।
हेतु–संचय–दृष्टान्ताः प्राप्त्यभिप्राय एव च॥
निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम्।
गुणातिपातातिशयौ तुल्यतर्कः पदोच्चयः॥
दृष्टं चैवोपदिष्टं च विचारस्तद्विपर्ययः।
भ्रंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा॥
अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च।
मनोरथश्च लेशश्च क्षोभोऽथ गुणकीर्तनम्॥
ज्ञेयान्यनुक्तसिद्धिश्च प्रियं वचनमेव च।
षट्त्रिंशल्लक्षणान्येव काव्यबन्धेषु निर्दिशेत्॥[२]

---

१. भरतनाट्यशास्त्रस्य १९४३–यीशुसंवत्सरे निर्णयसागरतः प्रकाशितस्य षोडशाध्यायारम्भे पादटिप्पणी। बडौदासंस्करणे प्रथमे षोडशेऽध्याये च।

२. बडौदातः प्रकाशितस्य साभिनवभारतीकस्य नाट्यशास्त्रस्य सप्तदशाध्या-

इति च लक्षणनामानो ये विशेषा मुनिना भरतेन, तदुपजीविभिश्च भोजराज[1]-जयदेव[2]-शारदातनय[3] - शिङ्गभूपाल[4] - विश्वनाथ[5] - सागरनन्दि[6]-रूपगोस्वामि[7]भिः, सवादधर्मतया गृहीतानि, प्रतिपादितानि च काव्यार्थ-धर्मतया तेषा गुणोपमादिभ्यः को नु व्यतिरेक' इति चेन्न कोऽपीति दण्डी, यथोच्यत एतेन—

'यच्च सन्ध्यङ्ग-वृत्त्यङ्ग-लक्षणाद्यागमान्तरे ।
व्यावर्णितमिद चेष्टमलकारतयैव नः ॥[8] इति ।

सैव प्रतिपत्तिर्धनिकस्याप्यवलोककृतो दशरूपके। तथा चोच्यत एतेन—'विभूषण चाक्षरसहृतिश्च शोभाभिमानौ गुणकीर्तन चेत्येवमादीनि षट्त्रिशत् काव्यलक्षणानि उपमादिष्वलकारेष्वन्तर्भावान्न पृथगुक्तानी'ति[9] ।

---

यारम्भकारिका ।

१. शृङ्गारप्रकाशस्य द्वादशे प्रकाशे सन्ध्यङ्गैरभिन्नतया चतुष्षष्टित्वेन प्रतिपादितानि लक्षणानि ।

२. चन्द्रालोकस्य तृतीये मयूखे दश लक्षणानि लक्षितान्युदाहृतानि च ।

३. भावप्रकाशने शारदातनय ८।१४—कारिकया लक्षणाना षट्त्रिशत्त्वमुदाहृत्य तान्यलकारतयापि ८।२१ कारिकया नयति ।

४. रसार्णवसुधाकरस्य तृतीये विलासे लक्षणान्येतानि भूषणनाम्ना व्याकृतानि ।

५ विश्वनाथ. साहित्यदर्पणस्य षष्ठे परिच्छेदे १७१-१९४—कारिकाभिर्लक्षणान्युद्दिश्य, लक्षयित्वा उदाहृत्य च नाट्यालकारान् पृथग्गणयति ॥

६. नाटकलक्षणरत्नकोषोस्य लक्षणानीमानि भूषणनाम्नोद्दिश्य लक्षयित्वा चोदाहरति १४६–१८६—कारिकाभि. ।

७. नाटकचन्द्रिकाया· १५०–१८३ कारिकाभि. ।

८ काव्यादर्शस्य २।३६६

९ दशरूपकावलोकचतुर्थप्रकाशान्ते ।

अस्ति व्यतिरेक इति चान्ये। के त इति जिज्ञासायामभिनवगुप्तपादाः प्रमाणम्। सङ्गिरन्ते हि ते लक्षणानां दश-लक्षणीमभिनवभारत्या. प्रथमे षोडशेऽध्याये। तथाहि—

१. तत्र केचिदाहुः 'इह गुणास्तावदात्मनि चिन्मये शृङ्गारादौ वर्त्तन्ते। शृङ्गारे चावश्य लक्ष्यत इति पृथक्सिद्धत्वादलङ्कारः। शरीर-निष्ठमेव यत् पद पृथक् सिद्ध तल्लक्षणम्, येन शरीरस्य सौन्दर्यं जायते। तच्च सिद्धरूप साध्यरूप वा। यथा 'श्यामे'–ति 'मदमन्थरगामिनी'-ति च। एतदेव लक्षणम्, तच्चालङ्क्रियते। अलङ्कारैर्युक्त काव्य लक्षणैर्विना न शोभते। 'क्रिया-वाच्योपमेयभेदेन तदेतल्लक्षण द्विधा। यथा 'श्यामा विशालाक्षी'-ति, 'मत्तमातङ्गगामिनी'-ति च।'

२ अन्ये मन्यन्ते—'इतिवृत्तखण्डकान्येव सन्ध्यङ्गकानि' इति लक्षणानि' इति च व्यपदिश्यन्ते। निमित्तभेदात् पूर्वापरसबन्धेन बीजोपक्षिप्तेऽर्थे निर्वहणपर्यन्ते परस्पर-सन्धायकत्वेन सन्ध्यङ्गतया व्यपदेश., रसविशेषोपयोगितया वृत्त्यङ्गवाचोयुक्तिः काव्यगतख्याति–प्राशस्त्योपयोगितया महापुरुषगत–पाश–ध्वज–पादरेखादिवल्लक्षणशब्दवाच्यता। तदुक्त तत्रैव—'लक्षणान्येव बीजार्थक्रमनिर्वाहकाणि चे'–ति, 'प्रतिसन्धि–तदङ्गानि फलसिद्ध्युपपत्तित'–इति च। तदत्र प्रथमे पक्षे वर्णनीयप्रधानभूताधिकारपुरुषगतगुणादिविभाग एव काव्ये पर्यवसीयते। द्वितीयपक्षे तु वर्णनीयः सकल एवेति। वृत्ति-लक्षणोऽर्थ. काव्यभेदात् त्रेधा विभज्यते।

३. एकेषा तु दर्शनम् 'कवेर्यः प्रतिभात्मा प्रथम· परिस्पन्दः, तद्व्यापारबलोपनीता गुणाः, प्रतिभावत एव हि रसाभिव्यञ्जनसामर्थ्यं माधुर्यादिरुपनिबन्धनसामर्थ्यं च, न सामान्यकवे.। अनेन शब्देनेद वस्तु वर्णयामीत्येवंभूतवर्णनापरपर्याय–द्वितीय–व्यापार–सपाद्या अलंकाराः। शब्दान–मीभि· शब्दैः, अर्थानमीभिरर्थैः सघटयामीत्येवमात्मकस्तु

यस्तृतीयः कवेः परिस्पन्दः तदधीनात्मलाभादि-शब्दात्मार्थाभिव्यञ्जन-व्यापाराणि शब्दार्थोपसंस्कारकल्पानि क्रियारूपाणि तु 'लक्षणानी'-ति। यदुक्तं तत्रैव—

शब्दार्थयोः क्रियैवेयं सश्रिता देहभूतयोः।
काव्ये तया दर्शितानि लक्षणानि विदुर्बुधाः ॥'-इति ॥
काव्येऽप्यस्ति तथा कश्चित् स्निग्धः रूपोऽर्थ-शब्दयोः।
यः श्लेषादिगुण-व्यक्तिदक्षः स्याल्लक्षणान्वित ॥'-इति ॥
चेष्टाद्यलङ्कारदृष्टान्तचिह्नम्' इति च।

अत्र पक्षे कविव्यापारभेदात् गुणालकारलक्षणविभागः।

४. अपरे सगिरन्ते 'अभिनेयाः काव्यबन्धम् रूपकम्। कवेः स्वसामर्थ्याधानाय तावदभ्यासो निर्माणविधेयो लक्षणम्, तेन लोकोत्तर-हृद्यवर्णने योगात्। तथाहि किञ्चित् प्रबन्धजात गुणालङ्कारनिकरप्रधानम्, यथा मेघदूताख्यम्, तद् विभूषणाख्य लक्षणम्, एवमन्यदपि'-इति।

५. 'प्रबन्धधर्मा लक्षणानी'-ति केचित् तु ब्रुवते।

६. 'कवेरभिप्रायविशेषो लक्षणमि'-तीतरे मन्यन्ते।

७ केचिद् 'यथास्थानविशेष यद् गुणालङ्कारायोजन तल्लक्षणम्'-इति।

८ परे त्व गाषन्त 'अलङ्कारादिनैरपेक्ष्येणैव निसर्गसुन्दरो योऽभिधेय-विशेषः काव्येषु दृश्यते, अमरुकश्लोकेष्विव, तत्सौन्दर्यहेतुर्यो धर्मः सः, स एव वार्थः काव्यशरीरविशेषरूपो वा लक्षणम्। 'काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विता' इत्यत्र 'तु'-शब्देन अर्थे न चित्रत्व लक्षणम्।

९. इतरेषा तु मतम् 'यथा तन्त्र-प्रसग-बाधाऽतिदेशादि[१] मीमासा-प्रसिद्ध वाक्यविशेष-व्यवच्छेद-लक्षण तथा काव्यविशेषव्यवच्छेदकं भूषणादिक लक्षणजातमिति त्वय पक्षो द्वितीयपक्षान्नातिरिच्यते।

१. आदिपदेनात्र आवापो ग्राह्य ऊहश्च। तथा च मीमासादर्शने शबरस्वामी—
तन्त्रम् = सकृत् कृत बहूनामुपकारकम्, यथा प्रदीपः। एवमेव—
आवाप. = आवृत्त्योपकारकम्, यथाऽनुलेपनम्। मी० द० ११।१।१ ॥→

१०. काव्ये धीरोदात्तादिगुणाधान वस्तुवर्णनाभङ्गिर्वा लक्षणमिति केचित् ॥'—इति ॥

किं नु खल्वेतेषु सिद्धान्ततयाऽभ्युपेयमिति प्रश्ने स एव महामाहेश्वर एववादी—

११. इह 'काव्यार्था रसा' इत्युक्तम्, उक्त च वर्णनीयम्, शब्दनीयम्, 'कवेः कर्मे'–ति व्युत्पत्तित्रय काव्यमिति। एतेन अभिधेयम्, अभिधानम्, अभिधा च स्वीकृत्यावस्थीयते। अपि च शब्दव्यापार, अभिधातृ–व्यापार॰, प्रतिपाद्यव्यापारश्चेति [व्यापारोऽपि] त्रिगत। तत्र शब्दस्य [यद्] रसाभिव्यक्तिक्षमार्थप्रतिपादकत्व स्वय च श्रोत्रे च सक्रान्तिमात्र [त्रेण] नान्तरीयकतया, तद् रसदर्शनयोग्यतापादनसामर्थ्याद् गुणशब्दवाच्यम्, आवर्तमानो द्वितीयो वर्ण. पद वा प्राक्तन-वर्ण-नाद-शोभाहेतुरलङ्कार। एवमर्थस्यापि यद् रसाभिव्यक्तिहेतुत्व सोऽर्थगुणः,

→ प्रसङ्ग. = प्रकृतावनुष्ठितत्वादेव विकृतेरुपकारक पुनरननुष्ठेयमङ्गम्, यथा दशपूर्णमासकृता. प्रयाजा पशुयागे। मी० द०११।१।१ ॥

बाध. = अनवकाश, प्रकृत्युपदिष्टतया विकृतावतिदिश्यमानस्य विकृत्युपदिष्टेनाङ्गविशेषेणानवकाश, प्रतिषेधोऽपवाद इति यावत्। मी० द० १०।१।१ ॥

अतिदेश = अतीत्य देश.। प्रकृत्यङ्गत्वेन विहितस्य प्रकृतिमतीत्य विकृतौ देश प्राप्ति॰। मी० द०७।१।१२ ॥

ऊह. = अध्याहार.। मी० द० ९ १।१।

तदिदं पारिभाषिकम्। भाषाया पुनस्तन्त्रावापौ श्लेषौ, प्रसङ्ग. अप्रस्तुतप्रशसा, बाधोऽपह्नव, अतिदेश आरोपोऽध्यवसायो वा, ऊहश्च समावनम्। व्यक्तिविवेककारस्तु तन्त्र-प्रसगाभ्या श्लेषमेव व्यतिरेचयते—

एकोऽनेकार्थकृद् यत्र स्वभावेनैव दीपवत्।
समयस्मृत्यनापेक्षस्तन्त्रस्य विषयो हि स ॥

नात एव प्रसङ्गस्य पद शब्दोऽवकल्प्यते ॥ इति पृ० ४०४ ॥

यस्तु वस्त्वन्तरं वदनस्येव चन्द्र इति सोऽलङ्कारः। यस्तु त्रिविधोऽप्यभिधाव्यापारः स लक्षणाना विषयः। तथाहि 'इदमनेन शब्देन अनया इतिकर्तव्यतया अमुना आशयेन इत्थभूतबुद्धिजननाय ब्रुव' इति कविः प्रवर्त्तते। स तथाभूत रसवत् काव्य विधत्ते। **तत्र चित्तवृत्त्यात्मकं रसं लक्षयंस्तत्तद्रसोचितविभावाद्–[ वि ]–वैचित्र्य-संपादकस्त्रिविधोऽभिधाव्यापारो लक्षणशब्देनोच्यते। इत्येतेषां सामान्यलक्षणम्।** यथा च पीवरत्व स्तनयोर्लक्षण मध्यस्य तु कुलक्षणम्, एवं किंचिदभिधीयमानं केनचिद् रूपेण रसोचितेन विभावादिरूपेण तमेव पदार्थक्रमं निरूपयल्लक्षणम्, अन्यत्र तु तत् कुलक्षणम्, तथा स्वार्थोऽपि च क्वचिद् अर्थमात्रम्, क्वचिदलङ्कारः अर्थतः क्वापि चित्रतः, क्वचिदलङ्कारादिप्रक्रियाविहीनोऽपि स्वय सुन्दरस्वभावः अर्थः, कुत्रचिच्छन्द इति त्रि–[ वि ]–विध व्यापारगामी, तद्द्वारेण अभिधानाभिधेय-तद्गुणालङ्काराद्यनुग्रहः शब्दानां शब्दैरर्थानामर्थैः शब्दानामर्थैस्तथापरैः संघटना विचित्रा कारयमाणा अभिधा व्यापारवती ह्युक्तिः निर्वाणप्रधानधुराधिरोही लक्षणाख्य एव। अत एव पूर्व 'काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विता' इति लक्षणान्येव हि प्रधानम्, तत्प्रसगेन गुणालङ्कारा इति तात्पर्यम्। तत्र लक्षणान्युद्देष्टुं तावदाह 'विभूषणमि'–त्यादि 'यथारस त्वि'-त्यन्तेन श्लोकचतुष्टयेन। तत्र यथारस ये भावा विभावानुभावव्यभिचारिणः तेषा येऽर्थाः तत्तद्रसविशेषविभावादिभाव प्रतिपद्यन्ते तानि लक्षणानीति सामान्यलक्षणम्। अत एव काव्ये सम्यक् प्रयोज्यानीति विषयस्तेषामुक्तः। भट्टनायकेनापि अभिधाव्यापारप्रधान काव्यमित्युक्तम्—

शब्द–व्यापारमाश्रित्य तत्र शास्त्र पृथग् विदुः।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः।
द्वयोर् गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥ इति।

भामहेनापि 'सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यत' इत्यादि। **तेन च परमार्थे व्यापार एव लक्षणम्।** स तु विषयद्वारेण विशेषलक्षणे

तु निरूप्यत इति तत्स्वीकृतत्वाद् अर्थोऽपि लक्षणम्, व्यापारोऽपि च। तद्विदा तु तदभ्यासपराणां च तथाभूतकाव्यात्मकविषयावलोकने झटित्येव प्रतिभाति[1]।

१२. यथा प्रासादकुड्यादिके कर्त्तव्ये प्रथम भूमिः तद्वत् काव्ये निर्मातव्ये भूमिकल्पः शब्दच्छन्दाविधिः, भित्तिस्थानीय लक्षणयोजनम्, चित्रकर्म-प्रतिमम् अलङ्कार-गुण-निवेशनम्, गवाक्षवातायनादिदेशीयो दशरूपक-विभागः इति'।[2]

**किमत्र प्रतिपत्तव्यमिति चेद् इदम् :**

'उक्तिवैचित्र्य-शुद्धोक्ती उभयोर्गूढपादसौ।
लक्षणत्वमभिप्रेक्ष्य श्रद्धत्ते [3]मुनि-भट्टयोः॥ ५९॥

लक्षणैर्लक्षणाना तु भरतोक्ते. प्रसिद्ध्यति।
उक्तिवैचित्र्यरूपत्व तेषा [4]प्रश्लिष्टता-मयम्॥ ६०॥

---

१. नाट्यशास्त्रस्यानुष्टुप्पाठीयलक्षणाध्यायाभिनवभारत्याम्।

२. नाट्यशास्त्रस्य षोडशाध्यायस्यान्तेऽभिनवभारती।

३. मुनिः भरत,। भट्टो भट्टनायक। गूढपात् अभिनवो गुप्त। तत्र व्यापार एव लक्षणमिति भट्टनायके श्रद्धा। भूषणादिलक्षणाभिनवभारत्यामुदाहरण-योजनया पुनर्भरते श्रद्धा। भित्तिस्थानीयत्व लक्षणानामिति तु तस्य स्वकीयोत्प्रेक्षा।

४. अत्राह्लोपमादिरूपा उपमादियोजनोद्भूता वा अस्पष्टपृथक्स्वलक्षणका भणि-तिभङ्गी। एतच्च सर्वं नाट्यशास्त्रकारिकाभि. स्पष्टम्, तत्तल्लक्षणसम्बन्धि-नीभि। तत्र क्वचिदुपमादिपूर्वरूपत्वं लक्षणानाम्, क्वचिच्चोपमादियोजनो-द्भूतत्वम्॥

अभिधा[1]-भावना[2]-भोग[3]-प्रख्यैर्भेदैस्तु यस्त्रिधा।
वक्तव्यरूपे व्यापारः प्रतिपाद्ये स वाक्यग॰ ॥ ६१ ॥

अत एव प्रबन्धस्य वाकोवाक्यात्मनस्तु या।
धर्मता लक्षणे दृष्टा सा तु युक्ता कथचन ॥ ६२ ॥

किन्त्वेवं सति पश्यामो न गुणे नाप्यलकृतौ।
धर्माणा लक्षणाख्यानां या भित्[4] तत्प्रतियोगिताम् ॥ ६३ ॥

रूपकाणा तु सवादे न गुणो नाप्यलकृतिः।
अस्ति किन्तु चमत्कारो लक्षण तत्र वीक्ष्यताम् ॥ ६४ ॥

लक्षणस्य न भित्तित्व किन्तु तत्रापि सगतम्।
आधारवर्णता युक्ता तस्य वक्तु कलाविदा ॥ ६५ ॥

आधारवर्णो नीलादिर्यत्र शुक्लादिलेखया।
आलेख्यकर्म तद्विद्भिः पूर्यते भङ्गिमाञ्चितम् ॥ ६६ ॥

आधारवर्णशून्याया भित्तेर्मसृणता तु या।
सा तु काव्यस्य पूर्णत्वमुपमातुं भवेत् क्षमा ॥ ६७ ॥

एव सति वय ब्रूमो लक्षण लक्षणस्य सत्।
यत्र प्रश्लिष्टता नास्ति नाप्यतद्भिन्नताहृतिः ॥ ६८ ॥

---

१. भट्टनायकमतेन अभिधा इषोरिव शब्दस्य दीर्घदीर्घतरो व्यापार । ततश्च सैव लक्षणा सैव च व्यञ्जना।

२. भावना काव्यपात्राणामसाधारण्यरूप-रसप्रत्यूह-निराकरणात्मा व्यापारः। स च काव्यैकनिष्ठ, न त्वभिनवोक्तदिशा भावकनिष्ठ, काव्यचर्वणातः पूर्वमपि तदुत्थानसभवात्। भावकत्वनिष्ठ–भावन–समुत्थापकत्वमेव हि काव्याना 'भावना'-व्यापार ।

३. भोगश्चमत्कारसमाधौ निमज्जयिता काव्यव्यापार.। परेषा स एव ध्वनि-र्व्यञ्जनं वा।

४. भिद् भेद, अन्योन्याभाव॰। लक्षणनिरूपिता या भेदप्रतियोगिता ता गुणालकारयोर्न पश्याम इत्यर्थ ।

## The Laksanas in poetry

### History

Bharata and his successors Bhoja, Jayadeva, Śāradātanaya, Śinga-( or Simha ) bhūpāla, Viśvanātha, Sāgaranandin Rūpagosvāmin etc have enumerated thirty six qualities of poetry calling them 'Laksana' as per list given in my samskrta gloss They are different in names but their number is only 36. Abhinavagupta in his Abhinvabhāratī defined Laksaṇas in following 12 ways—

1. Laksaṇas are some tokens of body, having two kinds accomplished and reaching accomlishment, like the age of 16 years and an intoxication of liquor respectively

2 Parts of story or the joints thereof These are used for the fame or admiration of hero. Therefore these are similer to the marks of banner, trap etc. in palm

3 Poet's capacity in selection of the excellent words, meanings and the suggested faculty,

4. Poet's practic to compose a masterpiece like Meghadūta.

5. Characteristics of epic-story, like the fancyful dialogues, romantic actions etc.

6. The special idea of Poet

7. An appropriate punctuation of guṇa and the figures of of speech

8 The peculiarity of words and meanings even in the absence of gunas and the figures of speech.

9 The distinctness of sentences from other sentences, Same as No. 2

10. The heroic excellence or the chequeredness in delineation of various events

Abhinava's own view

11 The notion, the intention and the estimation accompanied with judgement for the choice of words, meanings and their excellences in poet is or are 'laksana'. In nutshell poets mental awakening and activeness to arrange the Vibhāva Anubhāva etc is Laksana

12 Poem is a building, metres are its plinth and the Laksaṇas stand for its walls The Alamkārs and Guṇas are painting and other efficiencies Ten types of dramas are windows This-way Laksaṇa is a position which enables poems to be ornamented and qualitied.

लक्षणान्यपि भूयांसि तामिमां गुणतः परम् ।
अलंकारादथो पूर्वं सेवन्ते जातुचिच्छुभाम् ॥ १६० ॥

To me

160 Some other specialities too serve this spotless bride of Poetry, though not invariably and only after attainment of Guṇa and before conceivng the figures of speech

एतेन स्थितमेतद् यन्मध्यवर्तीनि खलु लक्षणाख्यानि तत्त्वानि अपूर्णत्वाभावाऽलभावाख्ययोर्गुणालकारयो. ॥ १६० ॥

अस्यैव निगदः—

अपूर्णतानिरासेन दोषाभावात्मनोदिताम् ।
पूर्णतां गुणरूपां तु सेवतेऽलंक्रिया सखी ॥ १६१ ॥

161. To the perfectness Guṇa, projected through the avoidance of imperfectness, the services of its inmate friend ornamentation are readily available

तत्र दोषाभावात्मने–त्येतस्य काकाक्षि–न्यायेन 'अपूर्णतानिरासेने'-त्यनेन 'पूर्णताम्' इत्यनेन चान्वयः। अपूर्णता हि दोषः, दोषाभावश्च पूर्णता। सैव च गुण.। ततश्च नात्यरुचिर यदुच्यते 'काव्यशोभायाः कर्त्तारो धर्माः गुणा', तदतिशयहेतवस्त्वलकारा'इति[1] वामनेन. तद्-विपरीत च तत्पूर्ववर्तिना श्रीदण्डिना 'काव्यशोभाकरान् धर्मानलकारान् प्रचक्षत'[2]इति। ननु नात्यरुचिरमिति ब्रुवाणा. क नु पश्यन्ति तत्र श्रीमन्तोऽरुचिबीजलेशमि'.ति चेदुच्यते त्रयमत्र बीजम् १ अलकार-पदस्योपमादिमात्रसीमितत्व-ग्रह', २. अलंकारपरिग्रहात् पूर्व काव्यत्व-परिग्रह', दण्डित्वग्रह इव दण्डपरिग्रहात्, ३. माधुर्यादीना स्वभावोक्त्यैव गतार्थत्वात् काव्योपाधि-भूत-शब्द-धर्मत्वाच्च गुणाना वस्तु-स्वरूपाऽ-नभिज्ञानं चेति। ननु सत्यरुचिलेशे कथमत्र तोषो भवतामिति चेद् अस्मदुक्तदिशा गुणालकारयोर्भेदस्य ग्रहादिति ब्रूमहे ॥ १६१ ॥

**अलंक्रियासखी चैषाऽप्यनवाप्त—प्रपूर्णता।**
**लक्षणत्वेन वीक्ष्येत भरतादिमनीषिभिः ॥१६२॥**

162. Actually it is this middle stage of an incompleteness of ornamentation which may be meant by the term 'Lakṣaṇa' to Bharata and his followers.

वीक्ष्येतेति लिङः प्रयोगेण भरतोक्तावपि नास्माक परितोष इति फलितम्।

ततश्च षट्त्रिंशतो लक्षणाना मध्याद् येषामुपमादिष्वन्तर्भाव' सुकर' तानि तेष्वन्तर्भावनीयानि, येषा च गुणेषु तानि गुणेषु। यानि त्ववशिष्येरं-स्तेषा स्वातन्त्र्येण लक्षणत्वमिति भरतमुनिप्रोक्त-तत्तल्लक्षणविशेष-लक्षणकारिकाऽभिनवभारतीप्रोक्ततदुदाहृतिभिश्चावसेयम्, अवसेयं च परवर्त्तिनां लक्षणोदाहरणैः ॥ १६२ ॥

१. काव्यालंकारसूत्र ग्रन्थे।
२. काव्यादर्शे।

I. This way the twelveth view is supported somehow

II Really only a comparative study of Laksana and figures of speech would discriminate the two Our theory is based on the same ground. [ K. 162 ]

प्रत्यभिज्ञापित-दोष तदभावरूप-गुणा अलभावरूपालकाराश्च साम्प्रत काव्यमेव भूयोऽपि स्मराम —

या चैषा पूर्णता-युक्ता संविन्नाम्नी नवा वधूः ।
सैव विच्छित्ति-सम्पन्ना कवितात्वं प्रपद्यते ॥१६३॥

Again the nature of Poetry

163. And, with its perfectness this newly married bride of intellect transforms itself in the form of poetry only after it is adorned.

दोषाभावात्मा सर्वावयवानवद्यता हि पूर्णतेत्युक्तम् । तत्रोच्छुष्क-शरीर-धातूनामपि अङ्गानामस्त्येव पूर्णत्वेन प्रसिद्धि । न च तथाविधस्य शरीरस्य प्रीतिपात्रत्व स्वाभाविकम् । एवमेव दोषरहितस्यापि काव्यस्य नास्त्येव तदवधि सहृदयजननेदीयस्त्व यदवधि नोद्भवन्ति तत्र लावण्यादयो विशेषा । अत एव महाकविः—

दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान् विशेषान् ज्योत्स्नान्तराणीव कलान्तराणी ॥[१]–ति,
उन्मीलित तूलिकयेव चित्र सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्र-शोभि वपुर्विभक्त नवयौवनेन ॥[२] इति च

देवीम्,

युवा युग-व्यायत-बाहुरसलः कपाट-वक्षाः परिणद्ध-कन्धरः ।
वपु.प्रकर्षादजयद् गुरु रघुस्तथापि नीचैर्विनयाददृश्यत ॥[3] इति

१. कुमारसम्भवे १.२५ विशेषानवयवान् ।

२. कुमारसम्भवे १.३२ ३. रघुवंशे ३.३४

रघुम्,

अथ मधु वनितानां नेत्र निर्वेशनीयं
मनसिजतरुपुष्पं रागबन्ध-प्रवालम् ।
अकृतकविधि सर्वाङ्गीणमाकल्पजातं
विलसितपदमाद्यं यौवनं स प्रपेदे ॥[1] इति

सुदर्शनं च स्पृहणीयत्वेन व्यावर्णयाञ्चक्रे, व्यावर्णयाञ्चक्रे च राज-यक्ष्मग्लपितमग्निवर्णं जुगुप्सनीयत्वेन—

तस्य पाण्डुवदनाऽल्पभूषणा सावलम्ब-गमना मृदु-स्वना ।
राज-यक्ष्म-परिहाणि-राययौ कामयान-समवस्थया तुलाम् ॥
व्योम पश्चिम-कला-स्थितेन्दु वा पङ्कशेषमिव घर्म-पल्वलम् ।
राज्ञि तत् कुलमभूत् क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥[2] इति ।

व्याख्यातसर्वस्वा एतेन पूर्णता । अत एवात्र विशेषणं विच्छित्तीति । विच्छित्तिश्चात्रोपमादयो विशेषा । एवं काव्यलक्षणे दोषाभावः, गुण., प्राचामलङ्कारत्वेनाभिमता उपमादयश्च गृहीताः । नव-वधूदृष्टान्तेन चोपमादयोऽप्यत्र लावण्यादय इवैवाविनाभूतत्वेन विवक्षिता काव्यशरीरे । तेषां काव्य-समवेतत्वेनैवाङ्गीकारात् । ततश्चोपमादयोऽप्यत्र न प्रागभाव-प्रतियोगिनः, कवचादय इव राधेये ।

यद्यपि नवाया वध्वा भवन्त्येव बाह्यान्यप्यलङ्करणानि, किन्तु न तैं रसिकस्य कश्चनार्थः । अव्याज-भव्यताया एव छेक[3]-जनस्पृहणीय-त्वात् ॥ १६३ ॥

---

१. रघुवंशे १८.५२ २. रघुवंशे १९.५०,५१ । वा = यथा, द्र० मेघ० २।२०, रघु० ४।४२, माल० ५।१२

३. छेका विदग्धाः । तथा च कर्पूरमञ्जर्यां 'छेका पुनः प्रकृति-चङ्गिम-लोभनीया.' । इति अव्याजसौन्दर्ये पुनः कालिदासोऽपि
'अव्याजसुन्दरीं तामि'–ति मालविकायै,
'इदं किलाव्याजमनोहरं वपुः' इति च शकुन्तलायै कृतावधानः ॥

I Pūrṇatā Completion of structure that is a necessity

II Here one should remember the fact that language is a thing which gets perfection gradually and this graduality is but pushing off of incompleteness or imperfectness partly The previous stages are the stages of Doṣa and the later ones are those of perfection. Now the mystery of Dosābhāva is clear

III Vicchitti Adronment as described in Kumārasambhava I 25 where 'Viśesa' means limbs and 'Lāvaṇyamayatva' stands for their accomplishment or every kind of charm.

IV Perfection or perfectness is an unavoidable fact for poetry or any sort of Art It is an essentiality and not merit At the same time perfectness should also be enriched with attractive specialities It is not sufficient for a beautiful personality to have only all the limbs in body, two eyes (and not one), two hands etc , but it is also essential for it to be healthy in a balanced quantity of humours, which projects splendour, lustre, elegance, dignity and glory after all there-in. These ( lustre etc. ) are the real 'Alamkāras' picked up and defined by the rhetoricians while counting the characteristics ( like Śobhā, Bhāva & Hāva ) of hero and heroine in both poetry and drama [ Daśarūpaka II. 10 and 30-33 So also Rasārṇavasudhākara ] Here one, if not unmarried, recollect what he wants in his bedroom when the beloved one has compromised for saxual intertainment No body likes outer decorations at this juncture Even the garments, though highly priced are disliked.

V Semi clarity ( Asphutava ) of 'Alamkāras' in Mammata's definition of poetry is limited upto the figures of speech We may extend his stand upto other inner faculties also, which composition is blessed with. [ K 163 ]

### रसस्य काव्यधर्मत्वाभावः

ननु 'काव्यस्यात्मा ध्वनिरि'–ति प्रतिज्ञाय क्रौञ्चवधदृष्टान्तेन 'काव्यस्यात्मा स एवार्थं' इति रसस्यैव ध्वनिसारभूततया काव्यात्मत्वमानन्दवर्धनाचार्याः प्रत्यपीपदन्, प्रत्यपीपदश्च लोचने तदेवाभिनवगुप्तपादा अपि 'काव्यस्यात्मा स एवार्थं इत्यत्र स एवेति प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यम्,'[१] इतिहासबलात्, प्रक्रान्तवृत्तिग्रन्थार्थबलाच्च, तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रस प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण 'ध्वनि. काव्यस्यात्मे'–ति सामान्येनोक्तम्' इत्येवम् । तस्यास्य रसस्य विषये कथमार्या उदासीना' इति चेद्—

**प्रभावो यस्तु काव्यस्य सामाजिकचिति स्थितः ।**
**स रसः, स न काव्यस्य धर्मतां प्रतिपद्यताम् ॥१६४॥**

Rasa and Poetry

164 Rasa is an outcome or effect of poetry, therefore that is a property of enjoyer's soul and not of poetry itself. And

---

१. 'रसध्वनिरिति मन्तव्यमि–'ति लोचनस्य मन्तव्यपदे लोचनटिप्पनिकायामस्मद्गुरुचरणाः 'मन्तव्यमनुमातव्यम्, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति [ बृहदा० २ ४ ५ ] उपनिषदि, 'मन्तव्यश्चोपपत्तिभिरि'–ति स्मृतौ च मननस्यानुमानत्वेन प्रसिद्धे. । तदाकारश्च 'काव्यस्यात्मे'-तिपदघटक तत्पदं रसध्वनि-विषयक-बोध-जनकत्व-निष्ठप्रकारतानिरूपित-प्रकृत-वक्तृ-समवेत-तात्पर्यीय-विशेष्यतावद्, इतिहासैकवाक्यत्वात्, प्रकृतग्रन्थैकवाक्यत्वाच्चेति' इति ।

प्रभावपदेन धनिक-भट्टनायकाद्यभिमतो भाव्यभावकभावोऽत्रागूरितः। प्रभावो फलम्। तत्र कारण काव्यम्। आश्रयश्च सामाजिकस्य चेतना। अस्ति च लोल्लटशङ्कुकादि-मत-निरसनपरयोर्भट्टनायकाभिनव-गुप्तयोः सामाजिकनिष्ठाना स्थायिनामेव रसत्वप्रतिपत्तिः। एव च विभावादिभिरभिव्यञ्जितस्य सामाजिकरत्यादेर्विभावादिभि सह सामाजिकस्यात्मना यो भोग, स एव, तज्जनित आनन्द एव वा रसः। स च सामाजिकचेतनाया धर्म., न तु काव्यस्य, तस्य सामाजिकचेतनातो भिन्नत्वात्। चेतना हि चतन्यमयी चैतन्यमेव वा। काव्य च ज्ञानमयत्वाज्जडम्। ज्ञान चेद शबलितमर्थेन ज्ञानात्मकेनैव। ततश्च चेतनाया ज्ञानरूपत्वदर्शनेऽपि विषयविषयिभावेन प्रत्युपस्थित एव भेदो ज्ञान-चेननयो.। तथा चोच्यते भोजदेवेनापि 'रसा हि सुखदुःखावस्थारूपा, ते च शरीरिणामेव चैतन्यवताम्, न काव्यस्य, तस्य शब्दार्थरूपतया अचेतनत्वेन' इति श्रृङ्गारप्रकाशे[1] ॥ १६४ ॥

तदिदमुक्तम्—

काव्यं सामाजिकश्चेति भिन्नरूपावुभावपि।
अन्य-स्थितस्य धर्मस्य कथं स्यादन्यधर्मता ॥१६५॥

165. Both are totally different Poetry and its Enjoyer. Now can the attribute of this be called of that ?

नपुंसकमनपुसकेनेति नियमनिगडात्यागे पुनः 'भिन्नरूपे उभे अपि' इति प्रगृह्य पठनीयम्। उत्तरार्धेनाधिकरणाभिन्नता प्रोक्ता ॥ १६५ ॥

I. In his ŚP. Bhoja too does not allow us to admit rasa as residing in poetry [ My gloss on K 164]

II To Bhoja mere 'Śṛṅgāra' reaches the stage of Rasa having all others like Vīra, Karuṇa, etc, as its attributes called Bhāvas like the sun its rays.

---

१ ज्योशीरसस्करणस्य ४३८ पृ०।

III. The Śṛṅgāra of Bhoja is a 'Blissful Ego'. He advocates 'this Ego exist in all the psychic states called rasa by others and it is only this Ego which can be called as 'Sthāyin=stable or existant emotion. Others are just like transitory [ variant=GJ ] emotions . Recollection ( Smṛti ), Shame ( Lajjā ) etc Rati ( Love ), Sorrow ( Śoka ), called sthayī by others are also transitory to Bhoja.

IV. Even if we admit 'Vīra', 'Karuṇa' etc. as rasa they can not be admitted as living in the form of poetry or poem. They, as we feel, live only in the heart of reader which is not poetry [ K. 165 ]

## पूर्वपक्षः : Objection

यद्युच्येत—

काव्यस्य ज्ञानरूपत्वे रसयोगोऽपि युज्यते ।
ज्ञानस्यापि रसस्येव चिदात्मैकात्म्यदर्शनात् ॥१६६॥

166. Well, Rasa may dwell even in the form of poetry, as, to you, poetry is subjective or knowledge and the knowledge is one with soul like Rasa.

तत्र काव्यस्येत्यादिना तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्याय उपस्थापितः । काव्यं हि ज्ञानरूपम् । तच्च चिद्रूप आत्मनि । तत्रैव चानन्दकोषोल्लासरूपो रस. । ततः सिद्ध काव्यरसयोरैकाधिकरण्यम् । विषयस्य पृथक्करणे पुनरभेद एव तयो· । काव्यरूप ज्ञान यत्किचिद् विषयीकरोति, रसरूप ज्ञानं च यत्किचिद् रत्यादि तत् सर्वं 'तत् त्वम्' इत्यादिषु प्रसिद्धया भागलक्षणया निराकृत्य विभाव्यते चेन्नास्त्येव भेद. काव्याद् रसस्य, रसाच्च काव्यस्य ॥ १६६ ॥

पुनश्च—

ज्ञानस्य चित्तवृत्तित्वेऽप्यस्ति नैव रस-क्षतिः।
रत्यादेश्चित्तवृत्तेर्हि रसत्वेनाऽभिमानतः ॥१६७॥

167 Even if knowledge is assumed as mental state it may be accepted as Rasa, because [ to some rhetoricians ] mental state like Rati or love transforms itself into Rasa. Thus—

यैश्च ज्ञान चित्तवृत्त्यात्मक मन्यते तन्मतेऽपि नास्ति क्षतिः। रसस्यापि मतान्तरे रत्यादिचित्तवृत्तिरूपत्वेनैवाभ्युपगमात्। ततश्च यत्र चित्ते काव्यात्मक ज्ञान तत्रैव रत्यादिवृत्त्यात्मकं ज्ञानमपीति स्थितमेव सामानाधिकरण्यं काव्यरसयोः स्थितश्च ततो रसावियोगः काव्यस्य ॥ १६७ ॥

अथ च—

आत्माऽब्धिः, शफरः काव्यं, रसश्चैव रसस्, ततः।
शफरे जलवत् काव्ये रसः केन नु वार्यताम् ॥१६८॥

168. The Soul is ocean, Poetry is fish and Rasa is water. The water enters fishes too This way how can one refute the existence of rasa in poetry ?

उभयसिद्धान्तमेलने पुनरब्धि-शफर-रस दृष्टान्तः। यथा जलनिधौ रसो जल, जले शफरः, शफरोदरे च जलम्, एवमेव सामाजिकस्यात्मनि रसो रसघन., ज्ञानाधिकरणमात्मेति दर्शनमनुसृत्य काव्यरूप ज्ञानमपि तत्रैवात्मनि। ज्ञाने चास्मिन् रत्यादीना नीरक्षीरवत् पासूदकवद् वोपसर्गः। यदेवोदक जलधौ तदेव जले स्थितस्य शफरस्योदरे। ततश्च स्थितमिद यत् काव्य सरसमिति ॥ १६८ ॥

उत्तरपक्षः

अत्रोच्यते—

एवं, रसस्य धर्मित्वं जलस्येव प्रसज्यते ।
काव्यस्यैव च धर्मत्वं शफरस्येव, का गतिः ॥१६९॥

Rejection

169. By this example of ocean, fish and water the entire theory proves totally reverse This way rasa will be proved qualitied like water and the poetry itself would be proved existing in rasa like fish in water. And this is not the exact position.

शफरदृष्टान्तेन पुना रस एवाश्रयः, काव्यमेव चाश्रितमिति रसस्यैव सकाव्यत्व न पुनः काव्यस्य सरसत्वम् ॥ १६९ ॥

सामानाधिकरण्येन धर्मधर्मित्वसाधने ।
सर्वस्य सर्वधर्मत्व-धर्मित्वे प्रतितिष्ठतः ॥१७०॥

170. 'To live in the same one' is not the criteria to fix up one's—qualitied. This way every thing will be proved qualitied and they would inter-change their nature [ the latter would be admitted as the former too, just like the former as latter ]

यत् पुनः सामानाधिकरण्यम् तदपि न प्रगल्भते धर्मधर्मिभावससिद्धौ । तथा सति देशकालसामानाधिकरण्यस्य सर्वत्र जागरूकत्वात् सवत्र सर्वस्याश्रयता, आश्रयिता च तथैवेति सर्वोपप्लवप्रसक्तिः । एवं च सामानाधिकरण्यवाचोयुक्तेः काव्ये सरसत्वप्रसाधनमन्यथासिद्धमेव ॥ १७० ॥

**आश्रयाश्रयिभावो हि धर्मधर्मित्व-साधकः ।**
**समवायोऽथवा काव्यरसयोश्चेक्ष्यते न सः ॥१७१॥**
**यत्रासावीक्ष्यते काव्यमलङ्कारश्च तौ, ततः ।**
**रसस्य काव्यधर्मत्वं जाग्रत्स्वप्नान्न भिद्यते ॥१७२॥**

171 'The existence in' or 'the unseparability (Samavāya)' is the proper criteria to fix the above characteristics. And either of them doesnot exist between poetry and rasa.

172. And where the said relation exist they are only Adequacy and poetry. Therefore the attribution of rasa for poetry is merely a day dream.

आश्रयाश्रयिभाव· पुनर्धर्मधर्मिभावस्य साधकः । स चात्र विपरीतत्वेन स्थित इत्यनुपदमेवोदीरितमेव । अस्ति च काव्य-रसयोराश्रयभेदः, काव्य कवौ, रसश्च सामाजिक इति । ननु सामाजिके तदुभयमपीति तमादाय करणीया संगतिरिति चेदेकतरपक्षपातेन प्रवृत्तिः सिद्धान्तसाधने प्रेक्षावदनुचितेति कविसामाजिकोभयसाधारण्येन क्रियमाणैव व्यवस्था समुचिता । अस्ति चापरोपि धर्मधर्मिभावसाधकः सम्बन्धः समवायो नाम । सामाजिकात्मनि समवेत एव रस इति चेत् सामाजिकमननुप्राप्ते काव्ये दृश्यत एव तद्व्यभिचार । किं च यैः काव्यस्य शब्दरूपत्वमभिमन्यते, मन्यते च शब्दस्य ध्वनिरूपत्व कथं तेषा क्षेमः । यदि त्वस्मत्पक्षमाश्रित्य काव्यस्य ज्ञानैकरूपतया क्रियते भवद्भिरपि विमर्शः, तदा परिपालनीयो भवद्भिरास्माकीनोऽन्योऽपि समय, प्रमाता प्रमेय चेत्यनयोरेकतरमात्र पक्षमाश्रित्य चिकीर्षितस्य वैज्ञानिकस्य विमर्शक्रमस्य । न चालम्बनीय भवद्भिः शाखामृगत्वम्, अनवस्थितैकपक्षत्वसतत्त्वम् ।

किं नु खल्वस्माक शाखामृगत्वमिति चेदिदमेव यदार्या काव्यं विमृशन्तः सामाजिक प्रविशन्ति कविं वा ।

सन्ति हि साहित्यशास्त्रे त्रयः पक्षाः कविः, काव्य सामाजिकश्चेति। तेष्वपि काव्यमेव प्रधानधुरामधिरोहति। कवित्व-सामाजिकत्वयोस्तदेकानुमेयत्वात्। तत्र जनकतया कवित्वस्य, भोक्तृतया च सामाजिकत्वस्यानुमानमिति काव्यमेव तयोर्द्वयोरप्यात्मलाभसाधनम्। एव च काव्यशरीरस्य विचारे प्रस्तुते तज्जनितस्य फलस्य विचारोऽप्रासगिकः। रसश्च फलमेव काव्यस्य, ततश्च काव्यविचारे रसविचारोऽपि सूर्यकान्तमणिविचारे तज्जनितस्य तूलादिदाहस्य विचार विडम्बयति। न चासावुचित ॥ १७१ ॥

एतदेव सर्वमभिसन्धाय सिद्धान्त उपस्थाप्यते यत्रासाविति। असौ आश्रयाश्रयिभावः समवायो वा। ताविति भूयोऽपि पुस्त्वमेवाश्रितमेकशेषे पुनपुसकयो॰। नपुसकत्वैकपक्षपातिभिः पुनरत्र ते इति विपरिणमय्य पठ्येत। स्वप्न एव मिथ्या, किं पुनर्जाग्रतो जनस्य ॥ १७२ ॥

**सरसत्वं तु काव्यस्य विभावाद्यर्थयोजना।**
**रसवत्त्वं रसोक्तिश्च तस्माद् युक्ता ह्यलंक्रिया ॥ १७३ ॥**

Why we say poetry is 'Sa-rasa=Bearing rasa'?

173. Saying—'Poetry is full of rasa' is based on the arrangement of Vibhāva, Anubhāva etc This type of rasa in poetry is but a sort of Alaṁkāra called 'Rasokti' [ by Bhoja and Vastūkti by me ]

यदुक्त श्रीभोजेनोक्तित्रयवादिना विभावाद्यर्थयोजनावत्त्वमेव काव्यस्य सरसत्वमिति। कृत तर्हि सामाजिकपर्यन्तमनुधावनेन काव्यरसाय। अत एव च प्राचा काव्ये रसवदलकारप्रेक्षा सुभगैव।

यथोच्यते भोजेन सरस्वतीकण्ठाभरणे—

वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम्।
सर्वासु ग्राहिणी तासु रसोक्ति प्रतिजानते ॥५।८॥ इति

शृङ्गारप्रकाशे च—

"त्रिविधः खल्वलंकारवर्गः वक्रोक्तिः स्वभावोक्तिः, रसोक्ति-श्चेति। तत्रोपमाद्यलारप्राधान्ये वक्रोक्तिः, श्लेषादिगुणप्राधान्ये स्वभा-वोक्तिः विभावानुभावव्यभिचारिसंयोगात् तु रसनिष्पत्तौ रसो-क्तिरि'–ति[1]।

सोऽय विवेकः प्रमेयैकविचारदृशा। प्रमातृदृशा विचारः पुनरनव-स्थितः। प्रमातॄणा हि मुनीनामिव विसवादबाहुलोकत्वकबलितान्तः-स्पन्दतया भिन्नमार्गत्व यथा तदमीभिरालकारिकाचार्यकलिभिरेव प्रमाणितम्॥ १७३॥

एतत् सर्वमभ्यन्तरीकृत्योच्यते—

प्रमेयं च प्रमाता चेत्यनयोर्भिन्नता-दृशम्।
आश्रयाणैर्न संमिश्रव्यामोहे विनिपत्यते॥ १७४॥

प्रमातृनिष्ठा ये धर्मास् ते प्रमातरि केवले।
ये च प्रमेये ते सर्वे प्रमेयैकपरायणाः॥ १७५॥

तामिमां प्राज्ञ-मर्यादां पालयन्तो मनीषिणः।
काव्यालंकारविज्ञाने नैव मुह्यन्ति जात्वपि॥ १७६॥

रसः प्रमातृ–मात्रैक–निष्ठोऽलंकरणं च नः।
प्रमेयमात्रनिष्ठात्म कलालोके परात्परे॥ १७७॥

The fundamental rule of criticism

174. 'Both are separate entities the subject and the perceptive thereof' Holding this conception no critic falls in the confused criticism, mixing up both falsely.

175. Things lying in perceptive are every time lie in perceptive only Accordingly the elements living in the subjects live always in subject alone

१. ज्योशेरस० ४३७ पृ०।

176. This is the way of thinking of wise men. The critics, maintainting it never miss the vision of the adequacy in poetry.

177 Rasa exists in the perceptive only, whereas our Alaṃkāra ( adequacy ) is a characteristic of percept alone, so far as the sublime universe of Arts is concerned

इदमत्र परिणतं यद् रसः प्रमातृमात्रनिष्ठः, अलंकारश्च प्रमेयमात्रपरायण इति। यदुक्तं 'ये च भेदकाः, ते कलायामलंकारः कलानाथे च ते रसः' [ का० १३१ ] इत्यस्माभिरेव ॥ १७७ ॥

इदं चात्रानुषङ्गिकमुपप्रस्तुवीमहि—

काव्य-नाट्य-रसोऽप्येष लोकानन्दैकसोदरः।
प्रसिद्धस्योपमानत्वे ब्रह्मानन्दोऽत्र[1] न क्षमः[2] ॥ ६९ ॥

ब्रह्मानन्दविदा यद् वा स्याद् ब्रह्मानन्दसोदरः।
लोकानन्दैकविद्भ्यस्तु लोकानन्दैक—सन्निभः ॥ ७० ॥

लोकानन्दाद् भवत्येष हीनो मिथ्यावलम्बनात्।
अत एव प्रवर्त्तन्ते काव्यात् सत्याय [3]भावकाः ॥ ७१ ॥

श्रेष्ठोऽप्येष भवेल्लोकात् [4]काल-यत्नाऽल्प-भावतः।
ब्रह्मानन्दाच्च[5] हीनोऽसौ मन्यते भावमिश्रणात् ॥ ७२ ॥

---

१. काव्य-नाट्य-रसोपमानभावे। २. क्षमः उचितः।

३. मिथ्यावलम्बनत्वमत्र विभावादीनां शब्दोपहितरूपत्वात्। लोके हि कारणादीनि स्वरूपसन्ति भवन्ति, काव्य-नाट्योः कलामात्रे च तान्येव विज्ञानैककलेवराणि। ततोऽसत्यानि। अत एव काव्ये नायिकासौन्दर्यमनुशील्य लोके तादृशीं तामुपलिप्सवो न न दृश्यन्तेऽभियुक्ताः। एवं च शृङ्गारकाव्यात् कान्तादिषु, शान्तकाव्याच्च परमेश्वरादिषु प्रवृत्तिः। सेयं काव्यात् सत्याय प्रवृत्तिः।

४ कालः यत्नश्चेत्युभयोरल्पभावोऽल्पत्वम्, न त्वात्यन्तिको निरासः।

५ अत एवाभिनवगुप्तपादाः 'परमेश्वरानन्द-विप्रुण्मात्रावभासो हि रसास्वादः। लौकिकं तु सुखं ततोऽपि निकृष्टप्रायम्, बहुतरदुःखानुषङ्गात्' इति ध्वन्यालोकलोचने [३।४३-कारिकायां 'या व्यापारवती'-ति पद्यस्य व्याख्यानान्ते]।

वस्तुतस्तु मनोराज्यं सोमशर्म-महामतेः[१] ।
काव्य–नाट्य–रस–ज्येष्ठ–भ्रातृतामश्नुतेतमाम् ॥ ७३ ॥
स्वप्नावस्थागतानन्दमात्र——साहृश्यगोचरः ।
काव्य–नाट्य–कलामात्र[२]–रस–स्पन्दः सचेतसाम् ॥ ७४ ॥

I. By the way let me submit that the rasa of poem or of drama is semblant with worldly rasa only. The Brahma-rasa is not fit for the semblance as the famous one only has the credit to hold the position of counterpart or upamāna in simile.

II. Or, it may be sembled with Brahman also by or for them who realized the Brahman But for them who are perceptives of worldy rasa only it stands as good as the worldly rasa.

III It may be inferior to the worldly-rasa being based on utopion material This is why the perceptives of artistic or poetic rasa rush towards the real one.

IV. It may sometimes be called as superior too, to the worldly-rasa as it has less time and less endeavour for its perception. At the same time it may be assumed inferior to Brahma-rasa due to the mixing of emotions ( as other rhetoricians say ).

V. Reality is this that the rasa of poetry and drama is an elder brother of the fabrication of [ Pañcatantra's ] wise Somaśarman, who distroyed the jar, full of the

---

१. सिक्थलम्बित-पादप्रहरणभग्न-घट सक्तु-पाण्डरस्य वराकस्य सोमशर्मणः कथा पञ्चतन्त्रे प्रसिद्धैव ।

२. कलामात्रं नाम सर्वा अपि कलाः । तासा सर्वासामपि रसस्य स्वप्नकल्पत्वाद्, ऋते सङ्गीतरसम् ॥

parched-grain-powder ( saktu ), and hanged on the swing of rope, while thinking of his future prospects of mrrriage and chirdren and beating them with by selling the powder and he blew his leg on the Jar.

VI. There is but a touch of bit of somekind of taste within the mind of enjoyer This touch or slapping only is the so called rasa of poetry or of any kind of art excepting music only. The fact may be adjusted in mind by comparing it with the rasa or joy of dream state. [ K. 177 ]

तदिदमत्र निगमनम्—

काव्यं ज्ञानम्, अलङ्कारस् तस्यात्मा, मध्यमाभिधा।
संविदव्यभिचारेण तत्रोपाधिश्च वाग्विदे ॥१७८॥

Following are the final words

178. Poetry is a concept or knowledge. Alamkāra : Adequacy is its soul. The intellect called Madhyamā is an invariable attribute to it. [ And it is all what is meant to be said in this work. ]

ज्ञानं ज्ञानविशेषः। अवाग्विदे तु नेति भावः ॥ १७८ ॥

अत्राऽस्माकीनं दर्शनम्—

प्रमेय-मात्र-दृष्ट्यैतद् दर्शनं नः, प्रमातृगाः।
आनन्दकोषस्योल्लासा ये तदत्र कथान्तरम् ॥१७९॥

Our criteria behind this thesis

179. This philosophy of ours is based on the viewpoint of the perceptable objects Poetry Here the discussion on the springing over the Bliss is a different matter. [ Though relevant but not necessray for discussion. ]

कथान्तरम् अपाङ्क्तेयत्वेनावमान्यं काव्यदर्शन इति यावत् ॥१७९॥

एतदेव पल्लवयितु श्लोक योजयाम —

**वृष्टिः काव्यं, कविर् मेघः, सस्यसंपद् रसा इमे ।**
**वृष्टि-मात्रैक-विज्ञाने वयं चातक-चञ्चवः ॥१८०॥**

180 The poetry is rain. Poet is cloud. These Rasas are harvest. Ours is the position of the neb of Cātaka-bird which concentrates only upon the perception of rain

चातकचञ्चुदृष्टान्तेन काव्यस्य स्वातिवृष्टित्वमागूर्यते, आगूर्यते च ततो वाङ्मयान्तरव्यतिरेकोऽपि, तस्या एव वृष्टेः शुक्तिविशेष कुक्षौ मौक्तिक-रत्नत्वेन परिणामात् । एव चात्रापि काव्य-शरीर-तदुपाधिभूत-शब्दज्ञानादि-सूक्ष्मतम तत्त्वोपपादकत्व शक्योत्प्रेक्षम् । यद्यपि काव्य-शरीर-विचारे हेतु-प्रयोजनाभिहितान्वयान्विताभिधानादिका विषया आनुषङ्गिका एव तथापि नूत्नतामुपाददानास्तेऽपि न न संग्राह्याः, वरयात्रिण इव विवाहमङ्गले ॥ १८० ॥

**साम्प्रतम् आशीः—**

**इमा रेवाप्रसादाख्य-सनातन-कवीरिताः ।**
**दिव्याञ्जनेयुः सद्दृक्षु काव्यालङ्कारकारिकाः ॥१८१॥**

**Final benediction**

**181. May these Kārikās of the poet Sanātana called Rewāprasāda ( Dwivedi ) be proved the divine collyrium in the eyes of superb intellecuals.**

सता तत्त्वाभिनिवेशिनाम्, न तु परप्रत्ययमात्रनेयानामनुर्वरमेधसाम् । दिव्याञ्जनोपमया यदत्रानुक्तं तदपि द्रष्टु शक्येत वर्त्मनानेन प्रज्ञाकोष–समुन्मेषे परिणताभ्यासै । ये पुनरताहृशास्तेषामपि न नोपकल्पेरन्नु-पकाराय कारिका इमा, अभ्यस्तचराणामपि विषयाणामत्र सविशेष-

मुपस्थापनात् । ये हि सन्तस्तेषा दृशः स्वयमेवोदारदर्शनाः किं पुनर्दिव्याञ्जनेन योजिता इति चापरमत्र हृदयम् ।। १८१ ।।

अत्रास्माक विचारमार्ग —

श्रद्धां मन्ये मातरं लोकमार्गे
सा वै सर्वा ओषधीः संप्रसूते ।
आन्वीक्षिक्यां किन्तु मे भाव-बन्धः
सा ता एता निस्तुषाः संविधत्ते । १८२ ।।

The way of my thinking

182. I do regard the reverence [ to the predecessors ] as Mother in worldly affairs. It is this which yields all the grain the permanent medicine for all However my affection is reserved for the critical analysis, as it is the only factor which makes every thing distinct

ओषध्योऽन्नानि भेषजानि च । भावबन्ध· प्रेमा कान्ताविषया रतिरिति यावत् । निस्तुषाः सारैकशेषा । लोकमार्गे, न तु वेदमार्गे, तत्रान्वीक्षिक्या अप्रसरात् । काव्यस्य लोकवृत्तित्वाल्लोकपदेन तदपि न न गृहीतम् । ओषधीपदेनात्र प्राचीनाचार्यसूतयोऽध्यवसीयन्ते । तासु श्रद्धया प्राप्तप्रवेशोऽवाप्त-तत्त्वज्ञानश्चान्वीक्षिक्याऽऽवापोद्वापावाश्रित्य चालनीन्यायेन प्रवर्तते तत्त्वपरीक्षासु निश्चिनुते च निष्कलुष सारम् । यदुच्यते 'तेजस्वि नावधीतमस्तु' इति ।। १८२ ।।

अथ प्रणयः—

भक्तिं विहाय च विहाय च भक्त्यभावं
ताटस्थ्य–मात्र–परमेण जनेन योऽयम् ।
स्वोपज्ञ आगम उपाधित काव्य–वर्त्म–
न्यत्राऽपि सन्तु सुजना ननु मत्सगोत्राः ।।१८३।।

Pray

183 Leavıng asıde both devotınn and hatred and by beıng completely nuteral what ever orıgınal vısıon ıs ıntroduced to the poetıcs by thıs fallow myself, pray, ıt may also be treated by the generous ıntellectuals ȷust as the ancıent works are treated by me

काव्यवर्त्म काव्यशास्त्रम्। सगोत्रत्वमत्र ताटस्थ्येन। जरत्तराणां प्रस्थानेषु अदाक्षिण्यमभिलक्ष्य मा स्म कुप्येयुः शास्त्रार्थ-प्रधन-निबद्ध-राभसीका अपि प्रत्नैकसस्कारा। प्राज्ञा इति मे प्रणयः प्रीतिपूर्विका याच्ञा। स्वोपज्ञत्वेन सत्स्वपि सवादेषु नात्र महत्त्वक्षतिः। यदुक्तमानन्द-वर्धनेन 'सवादिन्यो हि मेधाविना बुद्धय' इति ॥ १८३ ॥

अथ मङ्गलाशसा—

काव्येषु सीताचरिताभिधेन
कृताभिषेके द्यु-सरिद्-रसेन।
शास्त्रेषु मे कारिकयाऽनया स्या-
ल्ललाटिका काचन विश्वनाथे ॥ १८४ ॥

Benedıctıon

184. I among poems, sprınkled the Lord of unıverse [ Vıśva-nātha enshrıned at Kāsī by my[1] Sītācarıtam or the holy water of the Gangā. Now the needed decoratıon of Hıs forehead may be performed by thıs Kārıkā-work of mıne among Śāstras.

ललाटिका ललाटालंकृति। दिव्य-मलयज-रस-त्रिपुण्ड-श्री-रिति यावत्। विश्वनाथे भगवति काशीपतौ विश्वमात्रस्य, न तु यत्किञ्चिन्मात्रमार्ग-

1. An epıc of ten cantos ın sanskrıt, publıshed ın 1968 and agaın ın 1976 wıth Hindı translatıon.

मात्रस्य नाथे लब्धाधिकारे विदुषि। एवं च विश्वमात्र-प्रस्थान-नेदीयसी न. काव्य-विमर्श-सरणिरिति द्योतितम् ।

'आनन्द'-शब्दादारभ्य 'विश्वनाथ'-शब्देन पूर्णायाः कारिकाया अस्या माङ्गलिकी परिणतिः। मङ्गलं चेदं सनातनधर्माश्रितमपि न न तदितर-मार्ग-नेदीय., आनन्दस्य विश्वबन्धुतायाश्च विश्वजनीनत्वात् ।। इति—

अनङ्गभावं काव्येऽपि पश्यतां श्रेयसेऽस्तु नः ।
कामेऽनङ्गत्वमाधाय शृङ्गारी श्रीमहेश्वरः[1] ।। १८४ ।।

भारतवर्ष–विशेष–मध्यप्रदेशावयव–भोजपाल–भुक्तिगत–रेवोत्तर–तीर–प्रतिष्ठित–'नादनेर'–ग्राम–जनुष· काश्यपावत्सर–नैध्रुव–त्र्यार्षेयप्रवर–कश्यपगोत्रीयस्य माध्यन्दिन–शुक्लयजुर्वेदाध्यायिन कात्यायनसूत्रस्य
काशीहिन्दूविश्वविद्यालयीये प्राच्यविद्यासकाये
साहित्यविद्याऽध्यक्षस्य
सनातनकवेः श्रीमतो **रेवाप्रसाद-द्विवेदिनः** कृतौ **'काव्यालंकारकारिकायां'**
परिपूर्णे स्वोपज्ञे संस्कृताङ्ग्ल-विवृती ।।

।। ॐ तत् सत् ।।



१. अनङ्गत्वं स्थूलशरीररहितत्वम् । अपिशब्दात् कलामात्रसंग्रहः । शृङ्गारी गिरिजाऽऽसङ्ग-शृङ्गारी । महेश्वरः शिव., तन्नामाऽस्माकं सर्वविद्यागुरुः ऊर्ध्वाम्नाय-काशी-सुमेरुपीठाधीश्वर , कवितार्किकचक्रवर्ती, सर्वतन्त्रस्वतन्त्रः जगद्गुरु श्रीशङ्कराचार्यवर्य. श्रीमहेश्वरानन्दसरस्वतीपादश्च ।

# १. कारिका-सूची


अकाव्यमपि [ स ]* पृ० ९४
अखण्डार्थं ६१
अत एव च त [ सं ] पृ० ९५
अत एव च बौद्धे ११२
अत एव च लु ३९
अत एव च वृ [ सं ] पृ० ९४
अत एव ध्व १११
अत एव प्रव [ सं ] पृ० २४५
अत एव प्र [ स ] पृ० २६०
अतीतकवि ५१
अतीताऽनागत १०४
अत्र नास्ति [ स ] पृ० ११६
अधर्मोत्थान १४
अध्वनित्वे [ स ] पृ० ११५
अनलो २९
अनुनादस्तु ८९
अनुप्रासाद ६३
अनुवादस्तु ८९
अनुवादेषु [स] ९०
अनूवादेषु [ सं ] पृ० ९५
अन्यत् सर्वं १०९
अपरे त्व पृ० १८३
अपूर्णतानि १९१
अपूर्णतैव दोषः १४८
अभिधा-भाव [सं] पृ० २४५
अभिव्यक्तौ तु ८१
अभ्यस्त ५४
अभ्यासो मा ७२
अर्थः सहृदय [स] पृ० २०१
अर्थबन्ध ७३
अर्थबोधो ४९
अर्थश्च श ४६
अर्थसयोजने १५५
अर्थाच्छ ५७
अर्थान्तरं [स] पृ० ७
अर्थोल्लेख ९८
अलङ्कारो २१
अलङ्कारोऽपि ३०
अलङ्कारोऽपि ३३
अलङ्कारोऽप्य १२४
अलङ्कृतार्थं [स] १३५
अलंक्रियास १६२
अलभावो २८
अ—सुन्दरस्य १४५
अस्ति श्रीप पृ० १४३
अस्मन्मते २४
अस्मादेतस्य ११८
आत्मवान [स] पृ० ७
आत्मा दे ९२
आत्माब्धि १६८
आधारवर्णशू [सं] पृ० २४५
आधारवर्णो [स] पृ० २४५


* स० = संग्रहोपस्कारकारिके, पृ० = पृष्ठम् । शेषा अङ्काः कारिकाणाम् ।

आनन्दकोष १
आनन्नकोष [स] पृ० ६
आनन्दव पृ० १८३
आरोपो रू ४०
आश्रयाश्रयि १७१
इदप्रयोज १६
इमा काव्य १२७
इमा रेवा १८१
ईश्वरो ब्र १०८
उक्तिवैचित्र्य [स] पृ० २४४
उच्चा।र्यमाण ४५
उपादान नि १०
उपमादा [स] पृ० ३८
उपमादिस्व १५९
उपमाविरूपता ८७
उल्लास [स] पृ० ७
एकस्यापि ८
एतद् द्वित [स] पृ० ११६
एतद् यत् तत् ९९
एतेषु सप्र [स] पृ० ४५
एव रसस्य १६९
एवं शब्दस्य ११६
एव शब्दो ५०
एव सति न २७
एव सति [स] पृ० २४५
एव स्फोटस्य [स] पृ० ११६
एव हि व [स] पृ० ९४
एव काव्यस्य १२१
एव नास्त्येव १२३
एषणाश्रित १२
एषा विज्ञात [स] पृ० ११६
ऐन्द्रजालि पृ० १८३
औचित्य [स] पृ० ४४
औपम्यादि [स] पृ० ७
क इमान् वा [स] पृ० १८३
कथान्तर ७८
कवि सहृदये ६४
कवेबुंद्धौ १३५
कला कलान्तरे [स] पृ० ९४
कलानाथा १३२
कारणं प्रति २
कारुत्व च ७५
काव्य सामा १६५
काव्यक्षेत्रे [स] पृ० ११५
काव्य कला क १३१
काव्य ज्ञान १७८
काव्यनाट्य [स] पृ० २६०
काव्य तद् १८
काव्यमेव च [स] पृ० १९१
काव्यस्य ज्ञा ८६
काव्यस्य ज्ञा १६६
काव्य ज्ञानैकरूप ४४
काव्यस्य लक्षणे १४७
काव्यस्य सर्वं [स] पृ० ११६
काव्यस्याङ्ग २५
काव्यात् सगी १२९
काव्यालङ्कार [स] पृ० ३८
काव्यालङ्कार [स] पृ० ३८
काव्ये धर्मा १२५
काव्येऽलङ्का २६
काव्ये शब्दस्य ८५
काव्येषु साता १८४
काव्ये सर्वं ४२
काव्ये स्फटि [स] पृ० १८३

किन्तु क्षीर ७९
किन्तु राधा १२७
किन्त्वेव सति [सं] पृ० २४५
किमुच्येत त ७१
किमुच्येत त ९३
क्रियात्मनो १३०
क्षीर क्षीर ८०
गद्यबन्धे [स] पृ० ९४
गुणाभावे च १४९
गुणेषु रस १५४
चमत्कारस्तु [स] पृ० ७९
चमत्कार्यर्थबन्ध ७४
ज्ञानस्य चित्त १६७
ज्ञानात्मकेन १३४
ज्ञानात्मको ६२
तत क व्य च [स] पृ० १९१
ततश्च दोष १५२
ततश्च प्रति ९
तत्परत्वम ३८
तत्र श्रीमम्मटो पृ० १८३
तथा सति [स] पृ० ३८
तथैव मग १५८
तदा विश्व १२०
तस्मात् का ८४
तस्मादन्व ५६
तस्माद् रसा ३७
तस्मात्स्या [स] पृ० ७९
तामिमा प्रा १७६
ते कलाया १३१
तेन चित्र ७७
तेषामेषा २०
दोषाभावो १५१
द्वितीया ६
द्वैरूप्य ४३
धर्माणा ध १४०
ध्वनिना [स] पृ० ४२
ध्वन्यालोके [सं] पृ० ४२
नमामः पृ० १८२
न स्यात् १७
नारदादि ३
नृत्य काव्य [स] पृ० ९४
नो चेद् वि ६८
पदवाक्य ६७
पराया १००
पर्यायोक्तौ ४१
पिता तु काव्य ६५
पूर्णताभू १५०
पूर्णतामीयु १५६
पौत्रस्य ६६
प्रतिबिम्बप्र ८२
प्रतिबिम्बा [स] पृ० ९४
प्रध्वंसो १५३
प्रभावो यस्तु १६४
प्रमातृनि १७५
प्रमेय च प्र १७४
प्रमेयमात्रनि [सं] पृ० ४५
प्रमेयमात्र १७९
प्रयोजन क ११
प्रातिभत्व च ३५
प्रातिभी या १२६
ब्रह्मानन्द [स] पृ० २६०
ब्रह्मानन्दाच्च [स] पृ० २६०
भक्ति वि १८३
भक्त्या का १४१

| | |
|---|---|
| भट्टश्रीमु | पृ० १८३ |
| भाषान्तरानु [स] | पृ० ११५ |
| भाषाया एक | ९६ |
| भाषा स्वर | ९५ |
| भूषा लावण्य | १४२ |
| मध्यमाख्या | ९७ |
| मध्यमाख्या | १०२ |
| मायाया ब्र [स] | पृ० ११६ |
| मुखे पद्मत्व | १३८ |
| मूकाना | ५२ |
| मूर्त्तौ चित्रे [स] | पृ० १९१ |
| मृत्स्ना च | ११५ |
| मेघदूतस्य | ८३ |
| यच्च शब्दे [स] | पृ० ९४ |
| यत्रासावी | १७२ |
| यथा पात्र च [स] | पृ० ९४ |
| यथा पात्रस्य [स] | पृ० ९४ |
| यथा सनातनो | १५७ |
| यथाहि सुन्दरे | १४४ |
| यदि शब्दस्य | १२० |
| यद्वालङ्का | २२ |
| यश्च प्रती | ११० |
| यश्चासौ स्फो [स] | पृ० ११५ |
| यस्त्वर्थं | १०३ |
| या चैषा पूर्णता | १४९, १६३ |
| योऽसावति [स] | पृ० ७९ |
| युगावश्य | १३ |
| रजस्तमा | ७ |
| रत्यादेश्च | १६७ |
| रस प्रमातृ | १७७ |
| रसवत्त्व रसा | १७३ |
| रसस्त्वेषा | २३ |
| रसस्य या [स] | पृ० १८३ |
| रसोक्ति [स] | पृ० ७ |
| रसोऽल | १९ |
| रसोल्लेख | १०१ |
| राष्ट्रदेवप्र | १५ |
| रूपकाणा तु [स] | पृ० २४५ |
| रूपकादेस्तु | १३९ |
| लक्षणान्यपि | १६० |
| लक्षणस्य न [स] | पृ० २४५ |
| लक्षणैर्लं [स] | पृ० २४४ |
| लिपेर्भेदे | ९१ |
| लोकानन्दाद् [स] | पृ० २६० |
| लोकानन्दैक [स] | पृ० २६० |
| वक्रोक्ति [स] | पृ० ७ |
| वटस्य बी | ३१ |
| वय न बौद्धा [स] | पृ० १८८ |
| वस्तुतस्तु म [स] | पृ० २६१ |
| वस्तूक्तौ [स] | पृ० ७ |
| वाक्यज्ञानानि | १३६ |
| वाक्यार्थबु | ५५ |
| वाक्यार्थ एव | ३४ |
| वाङ्मयेऽप्य | ५८ |
| विनापि सस्क | ८८ |
| विभक्त्या | ३६ |
| विश्वमात्र [स] | पृ० १८८ |
| वृष्टिः काव्य | १८० |
| वेशन्त [स] | पृ० ९४ |
| वैखर्यामपि | १३३ |
| वैखर्यो वि | ९४ |
| वैदिकाश्च [स] | पृ० १८८ |
| वैदिकास्तु [स] | पृ० १८८ |
| व्यङ्ग्यव्य [स] | पृ० ११६ |

| | |
|---|---|
| व्यवहारवि [स] | पृ० ११६ |
| शक्तिर् ज्ञाने | ११९ |
| शब्द. स्वबोधे | ४८ |
| शब्दवृत्तेरमा [स] | पृ० ७ |
| शब्दशक्तिवि [स] | पृ० १८३ |
| शब्दस्यार्थं | ६९ |
| शब्दस्यैका | १२२ |
| शब्दादर्थाय | ५९ |
| शब्दादर्थाय | ५३ |
| शब्दार्थबोध | ११८ |
| शब्दार्थयोजने | १४८ |
| शब्दार्थयोर | ७० |
| शब्दे सत्यपि | ११७ |
| शब्दोऽर्थज्ञा | ११४ |
| शाकुन्तलस्य | ७६ |
| शैल शिला | ३२ |
| श्रद्धा मन्ये | १८२ |
| श्रेष्ठेऽप्येष [स] | पृ० २६० |
| ससारमात्रे | १०७ |
| सकेतोऽपि | ४७ |
| सगीतमुरली | १२८ |
| समवायोऽथ | १७१ |
| समाधौ यो | ४ |
| समुच्चयो | ६० |
| सम्बन्धो [स] | पृ० ७९ |
| सम्वादतत्त्व बु | १३७ |
| सरसत्व तु | १७३ |
| सर्वमेतत् | १२५ |
| सा चासौ [स] | पृ० ११६ |
| सामाजिस्य हृ | १४३ |
| सामानाधि | ११४ |
| सामानाधि | १७० |
| सालङ्कारस्य [स] | पृ० ३८ |
| साहित्य वेद्या | १४१ |
| सिद्धिमेतेन श | ११३ |
| सुन्दरस्य च | १४६ |
| सैव काव्यकला | १२६ |
| सोऽय रेवा [स] | पृ० १८३ |
| सौन्दर्यमेव [स] | पृ० ३७ |
| सौरभेय्या [स] | पृ० ९३ |
| स्फोटस्य चि [स] | पृ० ११५ |
| स्फोटेषु नि [स] | पृ० ११५ |
| स्वत सभ | १०५ |
| स्वप्नाव [स] | पृ० २६१ |
| स्वयंभू | ५ |
| हिमाचलेन | १०६ |

## २. उद्धरणविशेषानुक्रमः


| | |
|---|---|
| अक्षरादि | २०६ |
| अङ्गाश्रिता | ४१ |
| अथ मधु | २५० |
| अथानुवृ | २३८ |
| अथोपनि | १३५ |
| अनङ्गभाव काव्ये [ ममैव ] | २६६ |
| अनादिनिधन | ६९, १४९ |
| अनादिनिधना | १२३ |
| अनौचित्या | ४१ |
| अन्तरसङ्कल्प | १२३ |
| अपारे काव्य | १४७ |
| अपूर्वं यद् | २०२ |
| अप्रतिमस्य | ६३ |
| अभियोगे | ६४ |
| अर्थ स एव | १११ |
| अर्थ सहृदया | २१३, २२९ |
| अर्थंस्यैता | २१२ |
| अर्थापत्ति। | २३८ |
| अर्थं तत्त्वेन | २४३ |
| अलङ्कृति | ४२ |
| अविभागा | १२३ |
| अविभागेन | १०४, २१२ |
| अविभागो | ७० |
| अव्याजसुन्दरी | २५० |
| असमासा | ४१ |
| अस्त श्री [ ममैव ] | १४३ |
| अस्त्युत्तर | १३९ |
| अहमात्मा प | १२५ |
| आख्यानवादा | २३८ |
| आत्मनोऽन्य | २०६ |
| आत्मा वा अरे | २५२ |
| आप्तवाग | १४१ |
| आलेख्याकार | २०६ |
| आवयो | ३० |
| आशी. प्रियं | २३८ |
| आसीच्छवित | १५६ |
| आहारप्री | ६२ |
| इत्यन्वर्थं | १२५ |
| इदकिला | २५० |
| इद गुरुगि | १०२ |
| इद तदिति | ६५ |
| ईशा वास्य | १४१, १८८ |
| उन्मीलित | २४९ |
| उपश्लेष | ६५ |
| उभावेता | ४२ |
| ऋतम्भरा | १४ |
| एकोऽनेका | २४२ |
| एतावतोऽर्थं | २११ |
| एते दोषा | २२५ |
| एते ये | ३० |
| औत्पत्तिकस्तु | ९८ |
| कलाकाष्ठा | ३१ |
| कश्चित् का | ८९ |
| कालेन भिद्य | १५६ |
| काव्य यशसे | २४ |
| काव्यबन्धास्तु | २३८ |
| काव्यस्यात्मा | २५२ |
| काव्ये तया | २४१ |
| काव्येऽप्यस्ति | २४१ |
| कियतापि | १११ |

| | |
|---|---|
| कुपुत्रो जायेत | ३१ |
| कृत मयेद | १०१ |
| क्रमात् प्रख्यो | २०२ |
| क्लेशकर्म | १४१ |
| क्षण स्व | २२४ |
| क्षित्यङ्कुरा | १४१ |
| क्षीणवृत्ते | १३ |
| गतोऽस्तम | २१९ |
| गत्वा चो | १३५ |
| गुणातिपा | २३८ |
| गुणानाश्रि | ४१ |
| गुणीभूतव्यङ्ग्यत्व | ७८ |
| गूढार्थम | २२५ |
| ग्रहीतृग्र | ७० |
| चञ्चद्भुज | २३२ |
| चत्वारि वाक् | १२३ |
| चित्र वट | ८४ |
| चिरध्वस्त | १४२ |
| चूताङ्कुरा | ६८ |
| चेष्टालङ्कार | २४१ |
| छेका पुन | २५० |
| जगति भि | ५५ |
| ज्ञेयान्यनु | २३८ |
| तत प्रातिभ | १४ |
| ततो व्यपेक्षा | २१० |
| तत्र पूर्व | २०६ |
| तत्र शब्दा | १४ |
| तमर्थम | ४०, ४० |
| तसय प | २५० |
| ता एव | १४ |
| ता वीक्ष्य | २२१ |
| ताल्वोष्ठ | १२४ |
| तृतीय तु | २०६ |
| दिने दिने सा | २४९ |
| दिव्यमावप | २२६ |
| दीर्घीकुर्वन् | १३४ |
| दृष्ट चवोप | २३८ |
| दोषहान | २१० |
| द्वयोर्गुणत्वे | २४३ |
| द्वादशधा स | २१० |
| धिक् कोऽय | ३० |
| न तज्जल | १३५ |
| नमस्कृत्य | १२५ |
| न हि गौ स्व | ११२ |
| नात एव | २४२ |
| नादाख्या | १२३ |
| निदर्शन | २३८ |
| निर्विचार | १४ |
| नोदितो | १२५ |
| न्यायादपेत | २२५ |
| परवाक्यार्थ | १११ |
| परशक्तिम | १५६ |
| परस्परं | २११ |
| परस्परस्य ग्र | २११, २१२ |
| परस्वादा | २०६ |
| परोल्लि | १२५ |
| पुष्परभ्य | ६७ |
| प्रतिभा च | ६७ |
| प्रतीयमानं पु | २२० |
| प्रधानत्वाच्च | १२६ |
| प्रमाणत्वेन | ६२ |
| प्रसादस्तु | २३२ |
| प्राणवृत्तिम | १२३ |
| प्रातिभाद् | १४ |

| | |
|---|---|
| प्रोत्साहनो | २३८ |
| प्रौढोक्ति | १३३ |
| बहुशो य | २२६ |
| बिन्दु शिवा | १५६ |
| बिन्दुर्नादो | १५६ |
| बिन्दोस्त | १५७ |
| बुद्धि वृत्ति | १६४ |
| भक्त्या गुरौ | ६३ |
| भगवदनुग्र | १६ |
| भावनानु | ६५ |
| भावना चे | १४७ |
| भिद्यमाना | १५६ |
| भूषणाक्षर | २३८ |
| भ्रंशश्चानु | २३८ |
| मध्यमा | १२४ |
| मध्यान्म | १२६ |
| मनोरथश्च | २३८ |
| मरुल्लीला | १३४ |
| मा निषाद | १५ |
| मुक्तक यु | २१२ |
| मुग्ध. कि | ८५ |
| मैत्रीकरु | १३ |
| यः सयोग | ११६ |
| यच्च सन्ध्यङ्ग | २३९ |
| यज्ज्ञान | १४५ |
| यत्नत प्र | २२९ |
| यथा द्रव्य | ६५ |
| यदपि तद | २०६ |
| यदुच्यते पा | ३१ |
| यदुन्मील | १० |
| यश्चुम्बति | १११ |
| या च क्रिया | २१२ |
| या दुग्धा | १०९ |
| युवा युग | २४९ |
| येय विमर्शो | १२३ |
| ये रसस्या | २३१ |
| यो य शस्त्र | २३२ |
| रचि महेस | १०२ |
| रणत्करण | २३२ |
| रसस्याङ्गि | २३१ |
| रसानुगुण | ६७, २२४ |
| रसान्तराण्येक | १९२ |
| रौद्रादयो | २३२ |
| वक्रोक्तिश्च | २५८ |
| वत्सविवृ | ६१ |
| वर्त्तते यत् | २११ |
| वाक्य स्याद् | २०५ |
| वाक्यार्थं प्र | २१२ |
| वाग् धेनु | १०९ |
| वाचस्पतिस | २० |
| [तत्र] वाच्यः प्र | ५९ |
| वाच्याना वा | २२९ |
| वाच्योऽर्थो | २२९ |
| वासासि जी | १११ |
| विकल्पयोनयः | १४५ |
| विच्छेदग्रह | ६२ |
| विवक्षा व | २११ |
| विशोका | १३ |
| विश्वदैवत | ३० |
| विषयवती | १३ |
| वृत्तय पञ्चतय्यः | १४५ |
| वृत्ति पदा | २१३ |
| वृत्तिर्वि | २१० |
| वृत्तिस्त्रिधा | २१२ |

| | |
|---|---|
| वृत्त्यादीना | २१० |
| वेदशब्देभ्यः | १६४ |
| वैखर्याम | १५२ |
| वैदर्भादि | ३९ |
| व्यक्तौ | १६४ |
| व्योम पश्चिम | २५० |
| शक्तिमात्रा | १६३ |
| शब्दव्यापारमा | २४३ |
| शब्दाना वि | ६४ |
| शब्दार्थमात्र | १९५ |
| शब्दार्थयो। | २१२, २४१ |
| शब्दार्थौ स | २१३ |
| शब्दार्थौ सहितौ | ४२ |
| शब्दोपहित | १६३ |
| शब्दो वि | २१३ २२९ |
| शरीरीकर | ५० |
| शिखरिणि | १३३ |
| शिखिपि | १३७ |
| शुद्ध बुद्ध | १४१ |
| शृङ्गारी चेत् | १४७ |
| षट्त्रिंश | २३८ |
| सघातको | २१२ |
| सच्चिदा | १५६ |
| सज्जयति | १३३ |
| स नीरक्षीर | २१२ |
| सन्नसन् | १६३ |
| स बिन्दुनाद | १५६ |
| समर्पकत्व | २२२ |
| समाधानैर्म | ६३ |
| सम्बन्धो द्वा | २१० |
| सवादास्तु | २०६ |
| सवादो ह्य | २०६ |
| सरस्वती स्वा | २१ |
| सर्वदा सर्वथा | १६३ |
| सर्वासु ग्रा | २५८ |
| सर्वेषा स तु | १६४ |
| साक्षाच्छ | ६५ |
| साकाङ्क्षा | २०५ |
| सादरविती | १३३ |
| साधनव्य | १६३ |
| सामर्थ्यं च | २११ |
| सारूप्य | २३८ |
| सा व्यपेक्षा | २१२ |
| सा हि चक्षु | २२४ |
| सा हि चक्षु | ६७ |
| साहित्यम | २१३ |
| सैव वाक् | १२६ |
| सैव सार | १२३ |
| सैषा सर्वै | ७३, ७८ |
| सोऽर्थस्तद् | २२९ |
| स्त्रियो हि | ६४ |
| स्त्रीणाम | ६४ |
| स्थानेषु | १९३ |
| स्फुटा | २६ |
| स्मृतापि | १० |
| स्वभावचरणा | ६२ |
| स्वरवृत्ति | ६२ |
| स्वरूपज्यो | १२४ |
| स्वरूपज्यो | १२३ |
| स्वाश्रये स | १६३ |
| हसश्रेणी | १३५ |
| हिमगिरि | ३० |
| हृदये चित्त | १४ |
| हेतु सचय | १३८ |

# ३. वार्त्तिकम्

## ४०—तमोपस्कारकारिकावार्त्तिकम्

### [ वामनस्य सौन्दर्य-दर्शनम् ]

१, क 'काव्य ग्राह्यमलकारादि'—ति यद् वामनो जगौ ।
जगौ च ननु 'सौन्दर्यमलकार' इति स्वयम् ॥१॥
सिद्धमेतेन निर्द्वन्द्व निर्विकल्प च शब्दत ।
'सौन्दर्यादेव काव्यस्य ग्राह्यत्वमि'—ति वामने ॥२॥

ख 'कर्तार काव्यशोभाया ये धर्मास्ते गुणा' मता ।
ते च श्लेषादय शब्दे दशार्थे च दश स्थिता ॥३॥
वैदर्भीप्रभृतीना च प्राणा एते गुणास्तत ।
'रीतीना गुण एवात्मेत्ये'—ष सिद्धान्त आगत ॥४॥
ततश्च या 'रीतिरात्मा काव्यस्ये'—ति श्रुतिस्तत ।
काव्यात्मत्व गुणे सिद्ध न रीतौ वामनाध्वनि ॥५॥

ग अलङ्कारो हि सौन्दर्यमलङ्कारश्च निस्सृति ।
गुणौपम्याद्युपादान - दोषहान - समुच्चिते ॥६॥
एव गुणोऽपि सप्राप्त साधनत्व, ततश्च स ।
अप्रधानत्वमप्याप्तश्च्युत आत्मत्वतश्च तत् ॥७॥
प्रधानत्व यत सर्वै साध्य एवोररीकृतम् ।
साध्यत्वं चात्र सौन्दर्ये ततस्तस्यैव मुख्यता ॥८॥
आत्मत्व नाप्रधाने स्यात् प्रधाने सति तत्त्वत ।
'सौन्दर्यमेव काव्यात्मे'—त्यतो वामन - दर्शनम् ॥९॥

घ एव च 'वामनाचार्यो रीतिवादी'—ति धारणा ।
युक्तिहीना तथैवासौ 'गुणवादी'—त्यपि प्रथा ॥१०॥
वस्तुतो वामनाचार्य—दर्शनस्योक्त—युक्तित ।
'सौन्दर्यवाद' एव स्यादुचिता नाम - कल्पना ॥११॥

ङ इत्येव वामनाचार्यो 'रीतिरात्मे'-ति सूत्रयन् ।
'सौन्दर्यमात्मा काव्यस्ये'—त्येव सूत्रयतेऽस्फुटम् ॥१२॥
वामनाचार्य—सिद्धान्तस्तर्कैरुक्तैस्ततो भवेत् ।
'सौन्दर्यवाद'-नाम्नैव व्यवहाराय युक्तिभाक् ॥१३॥

च यद्वाऽ'लकारवादो'ऽपि विबुधैरभिधीयताम् ।
वामनाचार्य - सिद्धान्तो निर्विकल्प निरर्गलम् ॥११॥
अलङ्कारश्च सौन्दर्य चे—त्यनर्थान्तर यत ।
घट कलश इत्येव भेद शब्दैकसश्रित ॥१५॥
आचार्यान्तर—सन्दर्भेष्वलङ्कारस्य शब्दत ।
काव्यात्मत्व न पश्याम, पश्यामश्चास्य भूमताम् ॥१६॥
काव्यालङ्कारनाम्ना यद् भामहेन गुणादय ।
अपि स्फुट गृहीताश्च वामनेनापि तत्कृतौ ॥१७॥

छ उद्‌भट 'सार'-शब्देन काव्यालकारसज्ञिषु ।
रूपकादे प्रधानत्व पश्यतीव परन्त्वसौ ॥१८॥
अलकार-विभुत्व यन्न तत् खण्डयते तत ।
उद्‌भटस्याप्यलकारो गुणादीना च वाचक ॥१९॥
रुद्रट कुन्तश्चैव महिमा वाग्भटस्तथा ।
जगन्नाथश्च पश्यन्त्येवालकारस्य भूमताम् ॥२०॥
अलङ्कारस्य सारत्व रूपकादावुदीरयन् ।
काव्यात्मत्व रूपकादावुद्‌भट प्रतिशुश्रुवे ॥२१॥

ज वामनाचार्य-सिद्धान्ते न रीतिर् न गुण, परम् ।
सौन्दर्यमेव काव्यात्मा यद्वाऽलकार एव स ॥२२॥

रेवाप्रसादेन सनातनेन
श्रीवामनाचार्य-मतस्य सार ।
योऽसाविह प्रस्तुत एष भूयात्
सता प्रसादाय महाफलाय ॥२३॥

●